# PREFACE.

Lord Srinivasa of Tirupati is the most popular Deity in India and is worshipped every day by a very considerable number of pilgrims of all Hindu sects from all parts of India. The Dayasathakam is a very lovely poem in praise of the Lord's Grace from the pen of a great Poet and Saint. The poem contains a logical and poetic exposition of the Philosophy of Divine Grace. The Poet developes the idea that a wish to do what is ultimately though not apparently good is the Divine Purpose and such a benevolent purpose is the underlying motive, of the creation (Srishti), the protection (Sthithi) and absorption (Pralaya) of the Universe in succession. Punishment for error, though apparently savouring of cruelty is prompted by Grace. The great Saints who, living a Godly life adorned and adorn the world, are living embodiments of God's Grace. The great Holy Shrines, which are Houses of God, are the effusions of Grace to bring the Throne of God within the sight and reach of mortals. The Avatar is a Descent of Divinity into this world in the overflow of Grace to cheer up the Godly and correct the erring. The Singing of the Gita is the crown of mercy of the Krishna Avatar. The Gita deserves its name as it is the only book, which, without any propogandist agency, broadcastes itself far and wide and never comes in for the disapprobation of any thinking man. 'Vigita' means a matter in which there can be two opinions. Gita would not be Gita if it is Vigita i.e., if there were ever two opinions in the matter of its merit and greatness. Vigita is the opposite of Gita. The Poet his Prophetic Vision envisaged the Grand Future of the Gita and its all-world popularity in the last line of the Sloka on the Krishna Avatar. The Poet anticipates Shakspeare's picture of a talented young lady advocate in the person of Portia pleading for 'the quality of mercy which is not strained and which droppeth like the gentle rain from Heaven and blesseth-

him that gives and him that takes'. Mercy incarnating as a young woman enters the Court of God and pleads for the forgiving the sins of her naughty and erring children and wins the suit. 'What if my hand were thicker than itself with a brother's blood? Is there not rain enough in the sweet Heavens to wash it white as snow?' This sentiment of Shakespeare is voiced charmingly and forcibly in the verses singing of a deluge of Grace enveloping the Hill Lord and washing away all memory of the sins of those who invoke the aid of Grace. In the Sanskrit introduction and in the commentaries, the ideas intended and developed by the Poet have been attempted to be brought out. It is hoped that a study of this commentary will enable the reader to follow the Poet's mind. A Poet who gives his song to the world would think of the critic and reviewer at the end of his labours. The Poet here thinks of his critic in the last Sloka and asserts with confidence that the Poem will educate the critic in the art of good criticism. The Satakam, he says, will be a Katakam to the critic and educate him to discriminate good poetry from the bad.

I must not fail to acknowledge my gratitude to Messrs C. V. Venkataramaniengar and Rao Bahadur. S. Varadachariar for their generous help towards the cost of this publication; and to the learned Pandits of the Sanskrit College, Tiruvadi, for kindly correcting the manuscript and the proofs.

*A. V. Gopalachari.*




॥ श्रीः ॥

श्रीनिवासं परं ब्रह्म तन्नाम्नश्च गुरूत्तमान् ।
वन्दे भागवतान्सर्वान् देशिकाशयलब्धये ॥
व्यङ्ग्यप्रधाना गम्भीरा निगमान्तगुरोर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावं कृत्स्नमञ्जसा ॥

अस्य स्तोत्रस्याद्भुता विस्तृता व्याख्या महनीयैः श्रीमद्देवनाथाचार्यैविरचिता । 'बाणोच्छिष्टं जगत्सर्वम्' इतिवत्तैश्चर्वितप्रायमेवास्य स्तोत्रस्य रससर्वस्वम् । अस्ति चापराऽतिसमीचीना संस्कृतव्याख्या विद्वद्वरैः श्रीमद्रामानुजार्यैः प्रणीता; या लब्धाऽस्माभिरेतद्व्याख्यालेखनानन्तरम् । कृतकरः स्यादस्मद्यत्न इति बिभीमः । 'यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः । स्वमात्मानं............... कथमुपकरिष्यन्ति कवयः ॥' इति श्लोकोक्तन्यायमवलम्ब्य श्रीमदाचार्यस्तोत्राणां व्याख्याने प्रवृत्ता वयं श्रीनिवासदयान्वयत्यागासमर्थाः स्मः । 'गङ्गासङ्गेन नैर्मल्यं रथ्याद्भिर्लभ्यते यथा । वाचो विशुद्धिसिद्ध्यर्थं सङ्गम्यन्ते गुरोर्गिरः ॥' इति श्रीजयतीर्थमुनयस्तत्त्वप्रकाशिकोपक्रमे । 'सङ्गम्यन्ते व्याख्यानव्याख्येयभावेन संबध्यन्ते' इति चन्द्रिकायाम् । स एव मनोरथोऽस्माकमेतत्स्तोत्रव्याख्यानप्रवृत्तौ । श्रीनिवासदयाम्भोधिपरीवाहा गुरवः; तेषां सूक्तयस्तज्ज्ञानामृताब्धिपरीवाहशुभा अस्मास्वपारकरुणया प्रस्नु-

ताः । करुणापराधीनमानसानामाचार्याणां भक्तिपरीवाहभूतदयासागरावगाहनानुभवस्तोत्रं येन केनापि प्रकारेण व्याख्याय कथंचिच्छ्रीनिवासदयान्वयं लभेमहीत्येवाल प्रवर्तामहे । तत्रावतीर्णोऽतलस्पृगाप्लुतोऽयं दासजनो महतां प्रहसनोचितः स्यादेव । दयाप्रभाववर्णनविषयत्वात्साहसस्य दयनीयोऽयं साहसिको महताम् ।

गुणविशेषस्येदं स्तोत्रम्; न गुणिनः । गुणिनमपेक्ष्यापि गुणस्य प्राधान्यम् । गुणानां प्राधान्यवर्णनं न गुणिन्यूनतापादकम् । प्रत्युतोत्कर्षावहं तस्यैव गुणत्वात् । तथैव निगमवन्दिनां शैली । 'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता' । विपश्चिदपि ब्रह्मप्रधानम् । गुणाः प्राधान्यं भजन्ते भोगे । 'आनन्दं ब्रह्मणा विद्वान् । न बिभेति कुतश्चन' इति तत्प्रकरणे साधनदशायामपि गुणप्राधान्यवर्णनम् । तदेव गुणप्राधान्यमादृत्योक्तमाचार्यैः 'गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम्' । इति ॥

अस्तु नाम गुणप्राधान्यं गुण्यपेक्षया । गुणेषु मिथो न्यूनाधिकभावः कथम्? षड्गुणाः प्रसिद्धाः । 'प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद परमा शक्तिरपि च । परं तेजश्चेति प्रवरगुणषट्कं प्रथमजं गुणानां निःसीम्नां गणनविगुणानां प्रसवभूः' । इति वरदराजस्तवे श्रीवत्साङ्कमिश्राः । षड्गुणप्रभवा इतरे अनन्तकल्याणगुणाः । सुन्दरबाहुस्तवे 'सदा षाड्गुण्याख्यैः पृथुलबलविज्ञानशकनप्रभावीर्यैश्वर्यैरवधिविधुरैरेधितदशम्' । इति गुणषट्कं सङ्गृह्योक्तम् । अनन्तरश्लोके 'सौशील्याश्रितवत्सलत्वमृदुतासौहार्दसाम्यार्जवैः' इति मार्दवगुणाः सङ्गृहिरे । षाड्गुण्येन भगवतो भगवत्त्वम् । प्रधानगुणपरित्यागेनाप्रधानगुणस्तुतिः कथं वा तान्त्रिकैः सम्मन्येत? अयमाक्षेपः स्तोत्र एवोत्थाप्य परिहरिष्यते । 'आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः । राघवं शोभयन्त्येते षड् गुणाः पुरुषोत्तमम्' । इति रामायणे । प्रायेणैते दयागुणाः । इदमपरं षाड्गुण्यं दयाप्रचुरं पुरुषोत्तमस्य ।

'एतै' इत्यनेन प्रसिद्धषाड्गुण्यव्यवच्छेद इव । एतैर्गुणैस्तस्योत्तमपुरुषत्वम् । 'स च नित्यं प्रशान्तात्मा मृदुपूर्वं प्रभाषते । उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ कथंचिदुपकारेण कृतेनैकेन तुष्यति । न स्मरत्यपकाराणां शतमप्यात्मवत्तया' ॥ 'सानुक्रोशो जितक्रोधः' 'दीनानुकम्पी' इत्याद्यार्षं वचनं भवति । अजानतेवात्मजगुणजिज्ञासुना पित्राऽनुयुक्ताः पौरजानपदा जगदुः' 'बहवो नृप! कल्याणगुणाः पुत्रस्य सन्ति ते' इति । कल्याणगुणपरिभाषा प्राचेतसस्य साकेतवासिनां च । 'क्षान्तः सान्त्वयिता' 'मृदुः' 'सदा भव्यः 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इति कल्याणगुणपाठः । न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन् । क्रुद्धान्प्रसादयन् सर्वान्' इति पुरस्त्रियो रामविरहे । 'देवकल्पमृजुं शान्तं रिपूणामपि वत्सलम्' इति लक्ष्मणः कौसल्यां प्रति । 'आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः' इति रक्षोवधप्रतिज्ञां ब्राह्मणेभ्यः कुर्वाणं भर्तारं स्मारयित्वा शिक्षयति देवी सीता । 'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ इति स्वसततहिंसकराक्षसीजनपरित्राणाय हनूमन्तं बोधयति सा । साधूक्तं 'प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा' इति । अप्रतिषेधमात्रमप्यलं तद्दयनीयतायै । 'स तं निपतितं भूमौ शरण्यः शरणागतम् । वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥ इति सीतास्तनमांसगृध्नुकाकविषये दयाप्रसरो भगवतः । यद्यपि न प्रपन्नः सः; तथाऽपि भूमौ निपतितत्वमात्रेण तं प्रणत इति कृत्वाऽरक्षत् प्रभुः । उक्तं च तद्विषये स्तोत्ररत्ने 'प्रणत इति दयालुः' इति । विग्रहवान् धर्मो रामः सीतायै उपदिदेशानृशंस्यस्य परमधर्मत्वम् । तदेवानूद्यते आचार्यैः 'करुणे त्वं च गुणेषु सार्वभौमी' इति । रामायणस्य विशेषतो दयागुणप्रकाशकत्वमभिप्रेत्योक्तमाचार्यैः 'दिव्ये दयाजलनिधौ दिविषन्नियन्तुस्तीर्थे निदर्शितवतस्त्रिजगन्निषेव्यम् । प्राचः कवीन्निगमसम्मितसूनृतोक्तीन् प्राचेतसप्रभृतिकान् प्रणमामि नित्यम्' ॥ इति शरणत्वं निरवधिकदययैव संभवेत् । दयैका शरणमाश्रितानां प्रपन्नानाम् ।

'भीषास्माद्वातः पवते । भीषोदेति सूर्यः' इत्यादिभिः सर्वभयमूलस्य भगवतो ऽभयदायित्वं केवलं दययैव संभवेत् । 'त्राणे स्वामित्वमौचित्यं न्यासाद्याः सहकारिणः । प्रधानहेतुः स्वातन्त्र्यविशिष्टकरुणा विभोः' ॥ भगवदपेक्षयाऽपि दयायाः स्वातन्त्र्यम् । भगवतश्च दयापारतन्त्र्यम् । सर्वशेष्यपि दयाशेषः । इतरथाऽपराधचक्रवर्तिनामस्माकं न कदाऽपि शोकतरणसंभवः । अस्मदात्मभरसमर्पणं च भगवद्दयायामेव । 'यतिपतियामुनप्रभृतयः प्रथयन्ति दये जगति हितं न नस्त्वयि भरन्यसनादधिकम्' इति दयाप्रपदनानुष्ठानप्रतिपादनपरे षष्ठदशके संप्रदायनिष्कर्षमुपान्त्यश्लोके प्रकटय्य; तद्दशकान्तिमश्लोके दया शरणत्वेन व्रियते भवमूलहरणाय 'मृदुहृदये दये' इत्यादिना । षडङ्गस्य योगस्याङ्गिनोऽनुष्ठानं षष्ठदशके निवेश्यत इति रसिकैर्भाव्यम् । अपराधपूर्णाः प्रायेण जनाः । 'न कश्चिन्नापराध्यति' इति प्रजादोषादर्शनशीला परमवत्सला लोकमाता निश्चिकाय । यदि मातैव स्वप्रजाः सर्वा अपराधिन्य इति वक्ति; वयमपराधिन इत्यत्र किमपरं साक्ष्यमपेक्ष्येत । अपराधिभिर्दयैव शरणत्वेन मृग्येत । दयां विना काऽन्या गतिरपराधिनाम् । दयैकाऽस्मदनन्तादुःसहापराधानां निष्कृतिर्भवेत् । दयाविशिष्टेश्वरमिथुनेऽस्मद्रक्षाभरः समर्प्यते । दयाद्वारकं तयोः शरणवरणम् ; शरणीभवनं च । अद्वारकं साक्षाच्छरणं तु दयैव । यदि दयाहेतुकमीश्वरस्य रक्षकत्वम् ; रक्षणहेतोर्दयाया एव फलहेतुत्वे मध्ये किं तेनेति न्यायस्यावतारावकाशो भवेत् । 'दान्ते दयान्ते विदन्' 'आलम्बन्ते विमलमनसो विष्णुकान्ते दयां ते' 'अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥' इत्यादिभिर्दयाया अगतिकानामस्माकमालम्बनत्वं प्रदर्श्यते । कृपया केवलमिति केवलशब्देन गत्यन्तरशून्यत्वं स्पष्टीक्रियते । 'केवलं मदीयया दयया' इति रक्षकवचोभङ्गी पृथुगद्ये । 'दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥' इति श्लोके द्वितीयार्धे दयावात्सल्ये रक्षकविशेषणत्वेनोपादीयेते । दयावात्सल्या-

दिगुणगणान्वयं स्मृत्वा स्मृत्वाऽनन्तापराधजनितं त्रासं विजहीमः । ईदृश-गुणगणा एवास्माकं परमकल्याणानि । 'सन्तन्यमानमपराधगणं विचिन्त्य त्रस्यामि हन्त ! भवतीं च विभावयामि' इत्याचार्यैरियमेव रीतिराश्रीयते । 'हन्त' इति गतभीत्वप्रयुक्तहर्षद्योतनम् । 'विभावयामि' इति स्मारं स्मारमित्युक्तं दयादिगुणानां पुनः पुनः स्मरणम् । 'दयासिन्धो' 'निरवधिकवात्सल्यजलधे' इति सिन्धुरूपणमादावेवात्र क्रियते 'कमप्यनवधिं वन्दे करुणावरुणालयम्' इति । 'एवंविधस्वदोषपरिहारौपयिकगुणविशेषवत्तया सम्बोधयति दयासिन्धो इति' इति दयासिन्धुपदस्य व्याख्या स्तोत्रभाष्ये । निरवधिकत्व-विशेषणमुभयत्र समानम् । यद्यपि शक्त्यादयो गुणगणाः सन्ति; दयाक्षमा-दिगुणा एव कल्याणैकान्ता बहिष्कृतनिग्रहाः । दयादिमार्दवगुणानां कल्याणगुणत्वेन मुख्यव्यपदेशार्हत्वं व्यज्यते स्तोत्ररत्न 'वशी वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरः स्थिरः समः । कृती कृतज्ञस्त्वमसि स्वभावतः समस्तकल्याणगुणामृतोदधिः' ॥ इति । उक्तैर्म्रदिममधुरिमगुणैः समस्तकल्याणगुणात्मकत्वं समर्थ्यते । 'मृदुहृदये दये........मधुरे' इति षष्ठदशकान्तिमश्लोकः 'मृदुर्दयालुर्मधुरः' इति स्तोत्ररत्नरीत्यनुसारीति रसिकमनोरञ्जनं स्यात् । गुणनिर्देशक्रम उभयत्रैकरूपः । सौलभ्यसौशील्यवात्सल्यौदार्यक्षमापराधसहिष्णुत्वादयो दयाप्रभेदास्तत्परीवाहाः । यथा 'तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि शर्वपितामहाद्यैः' इत्युपक्रम्य 'विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः' इत्युपसंहरता स्तोत्ररत्नेन भगवत्परत्वे तात्पर्यभूमा गम्यते, तथा 'किञ्चैष शक्त्यतिशयेन न तेऽनुकम्प्यः' इत्युपक्रम्य 'तवानुकम्प्यः स्मरतः प्रतिज्ञां मदेकवर्जं किमिदं व्रतं ते' इत्युपसंहरता भगवदनुकम्पाविषयत्वलाभे च तात्पर्यभूयस्त्वं प्रकटीक्रियते । 'स्वयं 'कृपयैव—'इत्यपि सावधारणनिर्देशेन कृपाया एवाभीष्टसाधनत्वमित्युच्यते । 'पापैरनादिभवसंभववासनोत्थैर्दुःखेषु यः खलु मिमङ्क्षति हन्त जन्तुः । तं केवलं स्वकृपयैव समुद्धरिष्यंस्तद्दुष्कृतस्य ननु नि-

प्कृतिमात्थ शास्त्रैः' इति श्रीवैकुण्ठस्तवे उदाहृतरीतिरेवानुस्रियते । इतरव्यवच्छेदकैवकारेणाप्यपरितुष्यन्तः केवलमपि यदि समुद्गरणे गुणान्तरानन्वयं स्पष्टीचक्रुः । एतच्च 'कृपया केवलं' इति स्तोत्ररत्नश्लोके 'केवलं मदीययैव कृपया—' इति गद्यवचनं चानुसृत्य । 'शास्त्रैरनादिनिधनैः स्मृतिभिस्त्वदीयैर्दिव्यावतारचरितैः शुभया च दृष्ट्या । निःश्रेयसं यदुपकल्पयसि प्रजानां सा त्वत्कृपाजलधितल्लजवल्गितश्रीः' ।। इत्यनन्तरश्लोके शास्त्रप्रदीपदानं दिव्यावतारादिकं च सर्वं कृपाकार्यमिति स्पष्टमूचे । तादृश्यो दयाक्रियाः सर्वा अत्र विस्तरेण प्रतिपाद्यन्ते । यदुक्तं श्लोकान्ते 'त्वत्कृपाजलधितल्लजवल्गितश्रीः' इति तदनुस्रियत इवैतत्स्तोत्रान्ते 'दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः' इति । वल्गितं कल्लोलः । वल्गितश्रीश्च कल्लोलकोलाहलः । अनन्तरं क्षान्तिवात्सल्यसौशील्यादयो दयागुणा वर्ण्यन्ते । दयां प्रथमं प्रस्तुत्यानन्तरं क्षान्तिवात्सल्यादीनां प्रस्तावेन तेषां दयापरीवाहत्वं द्योत्यते । पटुप्रत्याहारप्रभृतिपुटपाकप्रचकितः प्रत्ययिततमः श्रीभीष्मः सहस्रनाम्नां स्तोत्रे पुनः पुनर्दयादिमृदुगुणानां प्राधान्यं कथयति । 'सुप्रसादः प्रसन्नात्मा, सुहृत्; वत्सलो वत्सी, अविज्ञाता; विश्वदक्षिणः, लोकबन्धुः; क्रोधहा, महाह्रदः; सुलभः, भयनाशनः; महानिधिः, प्रियकृत्; अरौद्रः, शिशिरः; अक्रूरः, पेशलः; शरणागतवत्सलः, विश्रामः; जीवनः' इत्यादीनि बहूनि नामानि दयागुणप्रख्यापकानि पपाठ । 'आनन्दो नन्दनो नन्दी' इति सह पाठेनानन्दमयत्वेऽपि प्रजानामानन्दयितृत्वेनैतस्य नन्दित्वमिति व्यज्यते । श्रुतावानन्दमयप्रकरणे 'एष ह्येवानन्दयाति' इति निगद्यते । आनन्दयितृत्वादृते तस्य पूर्णानन्दो न स्यादिति तयाऽपि व्यज्यत इव । ब्रह्मणत्वं विना न बृहत्त्वमात्रेण भगवान्निर्वृणोति । 'अशोकस्तारणः' इत्यशोकत्वं संसारिशोकतारणेन । 'भयकृत्' इत्युक्त्वाऽनुपदमेवोच्यते 'भयनाशनः' इति । भयप्रसङ्गं विना भयनाशकत्वस्यासम्भवात्तत्प्रसक्तिसम्पादनाय भयकृत्त्वम् । 'माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः' इति दयाधनत्वप्रख्यापनं सुबालोपनि-

पदि । 'यथा वा तरुणवत्सा वत्सं वत्सो वा मातरमनुगच्छति' इति श्रुतिः सहजवात्सल्यप्रख्यापिका । 'सुहृदं सर्वभूतानां ज्ञात्वा मां....' इति गीतं भगवता पञ्चमान्ते । 'गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्' इत्युपबृंहितं सोबालवचनं गीतायाम् । 'सर्वस्य शरणं सुहृत्' 'धातुः प्रसादान्महिमानमैशम्—' इति च शरणागतिविधायकश्वेताश्वतरोपनिषत् । 'तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' इति भगवान् । 'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं, इति दर्शनमपि भवति । 'प्रसादपरमौ नाथौ मम गेहमुपागतौ, इति मालाकारः । प्रसादपारवश्यं नाथयोः । 'अनुक्रोशो हि साधूनां महद्धर्मस्य लक्षणम् । अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति, ॥ इत्यानुशासनिके । 'आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः, इति भीष्मस्य चरमोपदेशः पाण्डवान् प्रत्यानुशासनिकान्ते । 'शरणं भवन्तमतिकारुणिकं भव भक्तिगम्यमधिगम्य जनाः, इति किरातार्जुनीयेऽष्टादशे शरणत्वस्य करुणाकाष्ठानिबन्धनत्वद्योतनम् । 'हार्दानुगृहीतः शताधिकया' इति मुक्त्यव्यवहितकारणत्वमनुग्रहस्य । 'परमतःसेतून्मानसम्बन्धभेदव्यपदेशेभ्यः, इत्यधिकरणे ब्रह्मणः श्रीनिवासस्य सर्वस्मात्परत्वमुच्यते । 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इति कठवल्ली । 'परः पराणां' 'परमं यः परायणम्' इति सर्वस्मात्परो भगवान् । तस्मादपि परा तद्दया । 'दयमानमनाः । वरद निजेच्छयैव परवानकरोः, इति श्रीरङ्गराजस्तवे निजेच्छया दयया भगवतः परवत्त्वं जगत्सृष्टाविति कथितम् । 'स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं पारे करिष्यति दया तव दुर्निवारा, इति वरदराजस्तवे । फलवितरणदक्षे पक्षपातानभिज्ञे भगवति निर्निमेषं पश्यति सति तमनादृत्य तेनापि दुर्निवारा तद्दया शोकस्य पारं तारयति । सहस्रं चक्षुषां स्फारमुन्मील्य पश्यन्नेवास्तां भगवान् । तेनाप्यनिवार्या ततोऽपि परा तद्दया शोचन्तमाश्रितजनं भवसागरादुद्धरेत् । अस्मिन् शतके दयायाः सर्वतः परत्वम् भूयो वर्ण्यते । 'परवति चतुरैस्ते विभ्रमैः श्रीनिवासे, इति श्रीनिवासदयायास्तस्मात्परत्वोक्तिः ।

प्कृतिमात्थ शास्त्रैः' इति श्रीवैकुण्ठस्तवे उदाहृतगीतिरेवानुस्रियते । इतरव्यवच्छेदकैनवकारेणाप्यपरितुष्यन्तः केवलमपि यदि समुद्धरणे गुणान्तरानन्वयं स्पष्टीचक्रुः । एतच्च 'कृपया केवलं' इति स्तोत्ररत्नश्लोकं 'केवलं मदीययैव कृपया--' इति गद्यवचनं चानुसृत्य । 'शास्त्रैरनादिनियनैः स्मृतिभिस्त्वदीयैर्दिव्यावतारचरितैः शुभया च दृष्ट्या । निःश्रेयसं यदुपकल्पयसि प्रजानां सा त्वत्कृपाजलधितल्लजवल्गितश्रीः' ॥ इत्यनन्तरश्लोके शास्त्रप्रदीपदानं दिव्यावतारादिकं च सर्वं कृपाकार्यमिति स्पष्टमूचे । तादृश्यो दयाक्रियाः सर्वा अत्र विस्तरेण प्रतिपाद्यन्ते । यदुक्तं श्लोकान्ते 'त्वत्कृपाजलधितल्लजवल्गितश्रीः' इति तदनुस्रियत इवैतत्स्तोत्रान्ते 'दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः' इति । वल्गितं कल्लोलः । वल्गितश्रीश्च कल्लोलकोलाहलः । अनन्तरं क्षान्तिवात्सल्यसौशील्यादयो दयागुणा वर्ण्यन्ते । दयां प्रथमं प्रस्तुत्यानन्तरं क्षान्तिवात्सल्यादीनां प्रस्तावेन तेषां दयापरीवाहत्वं द्योत्यते । पटुप्रत्याहारप्रभृतिपुटपाकाप्रचकितः प्रत्ययिततमः श्रीभीष्मः सहस्रनाम्नां स्तोत्रे पुनः पुनर्दयादिमृदुगुणानां प्राधान्यं कथयति । 'सुप्रसादः प्रसन्नात्मा, सुहृत्; वत्सलो वत्सी, अविज्ञाता; विश्वदक्षिणः, लोकबन्धुः; क्रोधहा, महाह्रदः; सुलभः, भयनाशनः; महानिधिः, प्रियकृत्; अरौद्रः, शिशिरः; अक्रूरः, पेशलः; शरणागतवत्सलः, विश्रामः; जीवनः' इत्यादीनि बहूनि नामानि दयागुणप्रख्यापकानि पपाठ । 'आनन्दो नन्दनो नन्दी' इति सह पाठेनानन्दमयत्वेऽपि प्रजानामानन्दयितृत्वेनैतस्य नन्दित्वमिति व्यज्यते । श्रुतावानन्दमयप्रकरणे 'एष ह्येवानन्दयाति' इति निगद्यते । आनन्दयितृत्वादृते तस्य पूर्णानन्दो न स्यादिति तयाऽपि व्यज्यत इव । ब्रह्मणत्वं विना न बृहत्त्वमात्रेण भगवान्निर्वृणोति । 'अशोकस्तारणः' इत्यशोकत्वं संसारिशोकतारणेन । 'भयकृत्' इत्युक्त्वाऽनुपदमेवोच्यते 'भयनाशनः' इति । भयप्रसङ्गं विना भयनाशकत्वस्यासम्भवात्तत्प्रसक्तिसम्पादनाय भयकृत्त्वम् । 'माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः' इति दयाधनत्वप्रख्यापनं सुबालोपनि-

पदि । 'यथा वा तरुणवत्सा वत्सं वत्सो वा मातरमनुगच्छति' इति श्रु-
तिः सहजवात्सल्यप्रख्यापिका । 'सुहृदं सर्वभूतानां ज्ञात्वा मां....' इति
गीतं भगवता पञ्चमान्ते । 'गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्' इ-
त्युपबृंहितं सोपालवचनं गीतायाम् । 'सर्वस्य शरणं सुहृत्' 'धातुः प्रसादा-
न्महिमानमीशम्—' इति च शरणागतिविधायकश्वेताश्वतरोपनिषत् । 'तत्प्र-
सादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' इति भगवान् । 'तस्मिन्
प्रसन्ने किमिहास्त्यलभ्यं, इति दर्शनमपि भवति । 'प्रसादपरमौ नाथौ मम
गेहमुपागतौ, इति मालाकारः । प्रसादपारवश्यं नाथयोः । 'अनुक्रोशो हि सा-
धूनां महद्धर्मस्य लक्षणम् । अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति, ॥
इत्यानुशासनिके । 'आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः, इति भीष्मस्य
चरमोपदेशः पाण्डवान् प्रत्यानुशासनिकान्ते । 'शरणं भवन्तमतिकारुणिकं
भव भक्तिगम्यमधिगम्य जनाः, इति किरातार्जुनीयेऽष्टादशे शरणत्वस्य करुणा-
काष्ठानिबन्धनत्वद्योतनम् । 'हार्दानुगृहीतः शताधिकया' इति मुक्त्यव्यवहि-
तकारणत्वमनुग्रहस्य । 'परमतःसेतून्मानसम्बन्धभेदव्यपदेशेभ्यः, इत्यधिकर-
णे ब्रह्मणः श्रीनिवासस्य सर्वस्मात्परत्वमुच्यते । 'पुरुषान्न परं किञ्चित्सा काष्ठा
सा परा गतिः' इति कठवल्ली । 'परः पराणां' 'परमं यः परायणम्' इति
सर्वस्मात्परो भगवान् । तस्मादपि परा तद्दया । 'दयमानमनाः । वरद नि-
जेच्छयैव परवानकरोः, इति श्रीरङ्गराजस्तवे निजेच्छया दयया भगवतः पर-
वत्त्वं जगत्सृष्टाविति कथितम् । 'स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं पारे
करिष्यति दया तव दुर्निवारा, इति वरदराजस्तवे । फलवितरणदक्षे पक्ष-
पातानभिज्ञे भगवति निर्निमेषं पश्यति सति तमनादृत्य तेनापि दुर्निवारा
तद्दया शोकस्य पारं तारयति । सहस्रं चक्षुषां स्फारमुन्मील्य पश्यन्नेवास्तां
भगवान् । तेनाप्यनिवार्या ततोऽपि परा तद्दया शोचन्तमाश्रितजनं भवसा-
गरादुद्धरेत् । अस्मिन् शतके दयायाः सर्वतः परत्वम् भूयो वर्ण्यते । 'पर-
वति चतुरैस्ते विभ्रमैः श्रीनिवासे, इति श्रीनिवासदयायास्तस्मात्परत्वोक्तिः ।

'स्वाधीनवृषगिरीशाम्, इति तस्य दयाधीनत्वम् । दयाधीनो भगवतश्चेतनजयः । दयाप्रवाहे गिरीशिखरस्थः सर्वोत्तुङ्गः श्रीनिवासोऽपि मज्जति । 'कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपतिस्वरूपद्वैगुण्यद्विगुणनिजबिन्दुः प्रवहसि, इति दयापृषतस्य ब्रह्मणोऽपि परिवृढतरत्वं वर्ण्यते । 'अत्र दयावात्सल्यजलसिन्धुत्वरूपणेनातितुङ्गानामपि स्वापराधानां तत्र निमज्जनं सूच्यते, इत्युक्तं स्तोत्रभाष्ये दयायाः सिन्धुत्वरूपणप्रयोजनकथनाय । अत्र त्रिसीमरहितस्य सर्वतः परिवृढस्य ब्रह्मणोऽपि दयाप्रवाहपृषते मज्जनं वर्ण्यते । विपलायितान्यपि सत्त्वानि दूरगतानि सुदुर्लभानि दयया द्राघीयस्या दृढतरया गुणवागुरयाऽऽनाय्य भगवद्वशीक्रियन्ते । व्यूहविभवार्चादिमूर्तयो दयाप्रयुक्तास्तत्परीवाहभूताः । कलशोदधिसम्पदो दयाया सन्मतिमन्थसंस्कृताया अमृतांशः श्रीनिवासस्य दिव्यदेहः । दयाप्रवाहो धरित्रीं संप्लाव्य तां देवीं शरणागतसस्यमालिनीं कृत्वा वृषशैलेशकृषीवलमानन्दयति । दयया वर्मितः शार्ङ्गी अस्मदनन्तदुःसहतीव्रापराधविषशल्यैरविद्धो भवति । भगवद्दिव्यमूर्तिः शीतशीता श्रद्धानावगाह्या दयादीर्घिका । शीलोपज्ञं शीतं कल्याणगुणौघं क्षरति दया । गुरुपरम्परा दयाम्भोधिपरीवाहपरम्परा । विष्वक्सेनो दयाम्भोध्युत्थितं शिक्षास्रोतः । वृषगिरीशगुणेश्वरी दया । समस्तजननी पुंप्रधानेश्वरेश्वरी श्रीरितरा देव्यश्च दयायाः प्रतिच्छन्दाः । भास्करस्य प्रभेव छायाभूता भगवतः श्रीः । तस्या भगवतश्छायात्वे भगवतो दयादिप्रतिमांशानां प्रायेण प्रतिबिम्बेऽन्वयः । तथा च बिम्बभूतभगवदन्वितदयायाश्छायाभूता देव्य इति वर्णनं नानुपपन्नम् । 'ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या इति चतुर्थदशके । लक्ष्म्या भगवद्दयाप्रतिबिम्बत्वात् करुणामिव रूपिणीम् इति तस्याः प्रथमदशके वर्णनम् । बिम्बरूपायाः करुणायाः प्रतिरूपा श्रीः । रूपिणीं करुणामिवे तीवशब्देन करुणाच्छायात्वं द्योत्यत इव । श्रीभूमिनीला दयामूर्तयः । ताश्च करुणाकार्यनिर्वाहं विभजन्ते । आश्रितदोषादर्शनं कारयति नीला । यदि कदाचित् दृष्टिपथं गच्छेद्दोषः तत्क्षा-

मया भूम्या । भगवद्दयाप्रतिघातानां वारणं क्रियते तयाऽपराधक्षमापणेन । अपराधः क्षान्तः । न तावता तुष्यामः । 'स्वजनयसि माता तदसि नः' इति स्वजनीकरणं क्रियते जनन्या श्रिया । भगवानपि करुणापूर्णत्वेन करुणावरुणालयत्वेन व्यक्तिं गच्छति । शक्त्यादयो गुणा दयाया अनुचराः । बोधश्च मार्गप्रदर्श्यग्रेसरः । ज्ञानविशेषत्वाद्दयारूपेच्छाया बोधस्याग्रेसरत्ववर्णनम् । परदुःखनिराकरणेच्छा दया आचार्यमते । 'परदुःखनिराकरणेच्छा दया' इति मल्लिनाथसूरिः किरातार्जुनीयव्याख्यायाम् । 'विविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका वृषगिरिविभोरिच्छा सा त्वं परैरपराहता' इत्यष्टमदशकोपक्रमे भगवदिच्छात्वं प्रदर्शितं दयायाः । इच्छा च ज्ञानविशेषस्तदवस्था । गुणषट्के प्रथमगणितज्ञानस्य विकारविशेषो दया । तथा च दयाया न षाड्गुण्यबहिर्भावः । दया च कालुष्यरूपाशुद्धिरहितं विशुद्धं ज्ञानम् । आनन्दमयस्यापि विशुद्धिः प्रार्थ्यते दयोदयेन । अकिञ्चननिधिरिति दया स्तूयते प्रथमदशकान्ते । तेन च दयायाः स्वयंप्रयोजनत्वं सिध्यति । भगवतः समन्वयाधिकरणभाष्यप्रतिपादितं निखिलं भगवद्दयायां समन्वेति । सृतिश्च साऽपवर्गत्रिवर्गयोः । तेन च 'फलमत उपपत्तेः' इति भगवति भगवता बादरायणेन सिद्धान्तितस्य फलप्रदत्वस्य तद्दयायां मुख्यसमन्वयप्रदर्शनम् । दयाद्वारकं फलप्रदत्वम् । अरविन्दलोचनमनःकान्ताप्रसादादृते न हि श्रेयः संभाव्यते नृणां कर्हिचित् संसृत्यक्षरवैष्णवाध्वसु । 'संराजः सानुकम्पात् पितुरुचितविदः साम्यभाजो वदान्यात्' इति फलाधिकरणविषयश्लोके सानुकम्पत्वविशेषणनिवेश आचार्यैरधिकरणसारावल्याम् । प्रलयपयोधौ सर्वमज्जकः सर्वोत्तुङ्गो भगवान् स्वयं दयार्णवे मज्जति । सर्वमज्जकस्यापि मज्जयित्री तद्दया स्वाम्भस्यपारे। 'जन्माद्यस्य यतः' इति ब्रह्मलक्षणम् । दयाद्वारकं ब्रह्मणो जन्मादिकर्तृत्वमिति द्वितीयदशके प्रदर्श्यते । 'ग्रीष्मे शीतमिव ह्रदम्' इति ब्रह्मणः शीतत्वानुभवो दयान्वयं विना न संभाव्येत । शीतह्रदोऽप्यतिलङ्घितशासनेष्वभीक्ष्णं विजृम्भितोष्मा [illegible]

शीततापप्रकृतिगमनाय । भगवत्तापनिर्वापिका दया । अपराधचक्रवर्तिनोऽस्मान्प्रतिभटान्दयैकाऽऽसाद्य भगवत्पादसात्कर्तुं प्रभवति । तां विनाऽस्मद्वशीकरणे तस्य नैराश्यमेव भवेत् । अस्माकमपि तां विना भगवद्वशीकरणं न संभवेत् । दया न केवलं भगवन्तं स्वपरतन्त्रीकरोति; अपि तु ये भगवन्तं प्रणतास्तद्दासास्तत्परतन्त्रमपि करोति तम् । तादृशं तस्या वैयात्यम् । सर्वज्ञं सहस्रांशुमविज्ञातारं मुग्धं दोष्यदोषिविवेकशून्यं करोति । 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' इति प्रसिद्धमजायमानं पुरुषं प्राणिनां कर्मायत्तभाविजन्मभेदान् ग्राहयति । सर्वोन्नतमपि तमतिनीचनिषादकुब्जादिसाम्यं प्रापयति । ब्रह्मणः साम्यं प्राप्यं प्राणिभिः । प्राणिसाम्यं भजते ब्रह्म । समस्तजननी चैतन्यस्तन्यदायिनी श्रीः । माता दया तु विश्वोपकारं दुग्धे । विश्वानुग्रहमाता दया ॥

'वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः । दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ।' इति श्लोकेन गुणान्तराण्यविगणय्य दयास्तुतिरचनोपपत्तिर्निरूप्यते । गुणत्वमेव न स्याद्गुणान्तराणां दयान्वयं विना । प्रत्युत दोषत्वमेव भवेत्तेषाम् । न दोषः स्तूयेत केनापि कविना । यत्सबन्धाधीनं गुणान्तराणां गुणत्वम् ; तेषां गुणत्वनिष्पादिकां निरूपाधिकगुणत्ववतीं दयामेव स्तुम इत्याशयः । दयाश्लेषाद्वृषशिखरिविश्वंभरगुणाः स्वदन्ते दान्तेभ्यः । 'कृपे परवतस्त्वया वृषगिरीशितुः क्रीडितं जगद्धितमशेषतः' इति सर्वस्य कृपाप्रयुक्तत्वम् ; हितत्वं च प्रतिज्ञायते । यथा लोकमाता नित्यमज्ञातनिग्रहा; तथा दया निग्रहकथानभिज्ञा । बहिष्कृतनिग्रहा सा । निग्रहोऽप्यनुग्रहो भवति दयाप्रभावेन । अशुद्ध्यपनयनाय निग्रहो भवेत् । 'क्रोधोऽपि तेऽनुग्रह एव संमतः' इति शत्रुकालियपत्न्यः सर्पजातिप्रभवा भर्तृजिघांसुकृष्णस्तुतौ । 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति भगवान् । 'विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभिर्दशत्येवं देवो जनितसुगतिं दण्डनविधिम्' इति सप्तमदशके ॥

किमर्थं श्रीनिवासदयाविषया स्तुतिः? श्रीनिवासत्वादेवेति ब्रूमः। श्रियं विना दयास्वरूपमेव न सिध्येत। नैतरमूर्तीनां श्रीनामाङ्कितत्वं नियमेन। करुणैव रूपिणी श्रीः। सा च श्रीनिवासनाम्न्यविनाभूता। सन्ति चात्र बहूनि हेत्वन्तराणि। दयानिर्वर्त्यं पापनिर्हरणम्। अघमर्षणं वाञ्छेयुः पापिष्ठाः। वेङ्कटगिरिश्च पापनिवर्तनार्थमेवावतीर्णः। वेमिति पापराशिर्बोधकमव्ययम्। कट दाहे। सर्वपापं भस्मसात्करोतीति वेङ्कटः। ध्रुवं स गिरिर्घनीभूतदयेत्युत्प्रेक्ष्यते प्रथमश्लोके। दयाकार्यमेव करोति श्रीनिवासनिवासभूता वेङ्कटगिरिः। 'सर्वपापप्रशमनं सर्वपुण्यविवर्धनम्' 'यद्यदिच्छति वै जन्तुर्मनसाऽपि च तं नृप। तथा सिद्धयति तत्सर्वं गिरेरस्य प्रभावतः' ॥ इति तत्प्रशंसा। अत एव गिरिप्रपदनेन स्तोत्रमारभ्यते। प्रपत्तिरत्र मुख्यप्रतिपाद्या। यथा श्रीशठकोपगाथासहस्री दीर्घशरणागतिस्तथेदं शतकम्। षष्ठदशकोपान्त्यश्लोके श्रीभाष्यकारयामुनप्रभृतयो दयायां भरन्यसनादधिकं हितं जगति नेति प्रथयन्तीत्युक्तम्। अन्तिमश्लोकेन भवमूलहरां लहरीं मयि निधेहि' इति संसारमोक्षप्रार्थना कृता। करुणालहरीति पण्डितराजविरचिता स्तुतिः कृष्णे स्वात्मनिवेदनरूपा। तत्स्तोत्रमपि शतकम्। 'विषीदता नाथ! विषानलोपमे विषादभूमौ भवसागरे विभो। परं प्रतीकारमपश्यताऽधुना मयाऽयमात्मा भवते निवेदितः' ॥ इति तत्स्तुत्युपक्रमः। दयामूर्तित्वेन तत्र भगवतोऽनुभवः। आचार्यश्लोकमवलोक्य करुणालहरीनामकरणं कृतं वा न वेति वयं न जानीमः। श्रीमद्यामुनाचार्यस्तोत्रच्छायया तत्स्तुतिः प्रणीतेति निश्चेतुं शक्नुमः। चिकीर्षितायां स्तोत्ररत्नव्याख्यायां तत्रोपपत्तीः प्रदर्शयिष्यामः। श्रीभाष्यमवतीर्णं श्रीनिवासदययेति प्रसिद्धम्। ततोऽपि महत्तरानुग्रहः किं नाम स्यादस्माकम्। भगवद्दयाकाष्ठा श्रीभाष्यावतारणम्। गिरिशिखरनिवासिनो दया निर्झरच्छलेन प्रवहेत्। वारिधाराविशेषैर्दयाप्रवाहो व्यज्येत। गिरिशिखरनिवासी गिरिराजः कृषीवलः स्यात्। शरणागतजनरूपसस्यवृद्ध्या दयाप्रवाहोपनतया प्रीयेत सः। शरणागतस्य-

स्यवृद्धिरर्चावतारस्य मुख्यं प्रयोजनम् । इदानीमपि कृषीवलाः पाश्चात्याः गिरिप्रदेशेषूषित्वा एलादिकृषिं कुर्वन्तो दृश्यन्ते । अयं दिव्यकृषीवलः प्रपन्नसस्यवृद्धिमीप्सति । उन्नतगिरिशिखरवासिना तुङ्गेन यदि नीचैः साम्यमुह्येत तदा सौशील्यादिदयागुणाः काष्ठां गच्छेयुः । न तथा सौशील्यप्रथा भूमिष्ठमूर्तिविषये; यथा शैलस्थे । 'भूमिष्ठानिव शैलस्थः' इति वैषम्यं नाद्रियते प्राज्ञतमेन करुणामूर्तिना श्रीनिवासेन । 'अमीषां निम्नत्वं वृषगिरिमतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि' इति कुत्रान्यत्र वर्णयितुं शक्येत । अवताराणां गिरेरवतरणं स्वरसम् । अर्चामूर्तीनां विभवावतारवर्णनं त्रिपु स्थलेपु कृतमाचार्यैः । श्रीरङ्गे, श्रीवेङ्कटगिरौ; श्रीहस्तिगिरौ च । अत्र दशाप्यवताराः प्रदर्श्यन्ते । हस्तिगिरौ कतिचिदेव; तद्गिरेरनुन्नतत्वात् । भूमिष्ठे श्रीरङ्गनिवासिनि कथमेदम्पर्येण सर्वावतारवर्णनकर्तृत्वमिति चेत्—तस्य नटाग्रणीत्वाद्रङ्गेऽवतारभूमिकापरिग्रहौचित्याच्चेति ब्रूमः । श्रीशब्दघटितभगवन्नामसु गरीयान् बहुमानः कुरुवृद्धस्य ।

'श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः । श्रीधरः श्रीकरः श्रेयः श्रीमाल्लोकत्रयाश्रयः ॥' इति । लोकत्रयाश्रयत्वं श्रीमत्त्वेनेति व्यज्यते । सर्वैराश्रीयमाणत्वरूपश्रीमहिमा श्रीशब्दव्युत्पत्तिसिद्धः । गिरिष्ठः कृषीवलः कृषिसंवर्धितप्रपन्नसस्यमालाः सम्यग्द्रष्टुं प्रभवेत् । स्तूयमाना च तद्दया शैलमारुह्यैतच्छतकमभ्यस्यमानान्सम्यगालोकयेत् । गिरिनिर्झरवारिभिस्ताननितरशरणानामाधिराज्येऽभिषिञ्चेत् । भगवद्दयया तामधिकृत्य प्रवृत्तेयं सरस्वती क्षेमं काङ्क्षद्भिः सम्यगभ्यस्येत । वारिधाराश्च दयाव्याञ्जिन्य आकाशगङ्गा पापविनाशिन्याद्याः । 'दृढविनिहिता निःश्रेणिस्त्वं दये निजपर्वभिः' इति कुत्रान्यत्र दयाया निःश्रेणित्वं रूप्येत । दयासोपानं श्रीवेङ्कटपतिचरणप्रापकम् । उदाहृतहेतुष्वेकैकमप्यलं श्रीनिवासमूर्तिवरणे दयावर्णनाय । समुच्चये किमु वक्तव्यम् ।

आचार्या भगवद्दयापरीवाहपरम्परा । तेषां परमकल्याणबुद्धयोऽस्मा-

कं शरणम् । तद्धियां परिकल्पनं विचित्रं वर्ण्यते श्रपत्तिप्रतिपादके पद्यद्वये । 'त्वदुदयतूलिकाभिरमुना वृषशैलजुषा स्थिरतरशिल्पिनैव परिकल्पितचित्रधियः । यतिपतियामुनप्रभृतयः प्रथयन्ति दये जगति हितं न नस्त्वयि भरन्यसनादधिकम्' ॥ इति । दयैव शरणमस्माकमित्युपदिश्यस्मद्देशिकैरनुकम्पैकविजितैः । 'क्रीडातूलिकया कृपारूपितया स्वयम् । एको विश्वमिदं चित्रं विभुः श्रीमानजीजनत्' ॥ इति यादवाभ्युदये एकयैव तूलिकया विश्वचित्रलेखनमुच्यते । अत्र बह्वयस्तूलिका एकबुद्धिचित्रलेखने । आ परिनिपातादन्यथान्यथा प्रमृज्य नवं नवं विलिख्यते नवनवशलाकाभिः । तूलिका चेयं न क्रीडातूलिका दयया केवलं रूपिता यथा जगच्चित्रलेखने । किं नु दयामयी तूलिका । न लीलान्वयगन्धोऽपि यतिपतियामुनप्रभृतिबुद्धिकल्पने । दया चोदीयमाना न यातयामा गतरसा । उदीयमाना दया वीर्यवत्तरा स्यात् । कालक्रमेण तस्या ह्रासः प्रसिद्धः । अत उच्यते उदयतूलिकाभिरिति । 'चिन्ताशाणोल्लिखितमसकृत्' इति हंससन्देशनिर्माणविषये आचार्याः । लिखित्वा लिखित्वा पुनः पुनर्विमृश्यान्यथाऽन्यथा विपरिणम्य रचितं हंससन्देशकाव्यं मेघसन्देशादन्यूनबहुमतिलब्धये । कवित्वरूपबहुमतो न निरपेक्षा आचार्याः । 'ये नाम केचिदिह नः कवयो मदन्ये मानः स्तुवन्ति मधुसूदनपादुके त्वाम् । लभ्येय गुणांशविनिवेशितमानसानां तेषामहं सबहुमानविलोकितानि' इति पादुकान्ते । 'सत्कारकालकूटं तरुणीकुणपं सभाभुजङ्गीं च । परिहरति राजधानीकुम्भीपाकम् ........' इति वदन्तः कवित्वेन बहुमतिं न न बहुमन्यन्ते । अखण्डब्रह्माण्डप्रथमतरशिल्पिना भगवतैव कल्पिता आचार्यधियः । 'सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव' इति पार्वतीविषये कुमारसंभवे । अनायासेन लीलयैव विश्वं सृजन् स्रष्टा तां प्रयत्नात्ससर्ज । नात्र विश्वसृजश्चतुर्मुखस्य सृष्टिः । स्थिरतरशिल्पिना श्रीनिवासेनैव सृज्यते आचार्यशुभबुद्धिः । पञ्चीकृतव्याकृतमात्रस्रष्टा वेधाः अपञ्चीकृताव्याकृतस्यापि स्थिरस्य स्रष्टा प्रथमतरशिल्पी भगवान् । यद्यपि

वेधसः सर्वमनुष्यनद्बुद्धिसृष्टावधिकारोऽस्ति; आचार्यधियः श्रीनिवासः स्वयं परिकल्पयति । लोकोत्तराः कल्याणतमा अतिविचित्रास्ताद्धियः । 'चित्ते निवेश्य परिकल्पितसत्त्वयोगा रूपोच्चयेन विधिना मनसा कृता नु' इति लोकोत्तरसुन्दरवपुःसृष्टिविषये कविसार्वभौमः कालिदासः । चित्रं निर्माय तदेव प्राणवत्कृतं स्वित्युल्लेखः । चित्रलेखने आ परितोषात्पुनः पुनः प्रमृज्य यथामनोरथमन्यथाऽन्यथा करणं सुशकम् । यावता तृप्तिर्जायते तावता तच्चित्रं प्राणवत्क्रियते । चित्रलेखनं विना वपुष एव प्रथमतो निर्माणे सृज्यमानप्राणिवपुषो यथेष्टमन्यथा विनिमयो न शक्यः । मनसा यथामनोरथं सर्वातिशायिरूपाद्युद्भावनं चित्रे तल्लेखनादपि सुलभम् । तदेवोच्यते 'रूपोच्चयेन विधिना मनसा कृता नु' इति । कृतयुगे मनसा सृष्टिः श्रूयते । कार्तयुगीनामाचार्यधियां दयाधनेन मनसा सृष्टिरुचिता । अत्र दयारूपमनोवृत्तिमयतूलिकाभिर्लिखितमिवाचार्याणां विचित्रधीचित्रमित्युल्लिख्यते । मनोवृत्तिस्थाने धर्मभूतज्ञानविकासविशेषा अस्मत्सिद्धान्ते । नात्र प्रथमं चित्रलेखनमनन्तरं चित्रलिखितस्य सत्त्वयोगपरिकल्पनम्; यथा शाकुन्तले । किन्तु प्राणप्राणभगवल्लिखिताचार्यधीचित्रं तथैवास्ते । एवं च निरवाधिकदयावत्त्वमस्मत्तीर्थकरधियां सिध्यति । श्रीनिवासदययैव ताः परिकल्पयन्ते । ततस्तासां न भ्रमविप्रलिप्सादिसंभवः । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति सूर्यचन्द्रादिलोकभासकतेजसां कल्पनम् । आचार्यधियां तु सृष्टौ 'परिकल्पित' इति पर्युपसृष्टकल्पनव्यवहारेण ततोऽपि वैलक्षण्यं व्यज्यत इव । शाकुन्तलश्लोकानुरोधश्च भवति । दयामयत्वादाचार्यधियामतिलघुभूतं सर्वसमाश्रयणीयं परमनिःश्रेयसोपायं ते प्रथयन्त्यपारदयया । 'मृदुहृदये दये–' इत्यनन्तरश्लोकः सङ्कल्पसूर्योदये वेङ्कटगिरौ गीयमानत्वेन पठ्यते ।

'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति बादरायणीयं सूत्रं ज्ञाधिकरणे । 'विज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः । विज्ञानमेवास्य

सारभूतो गुणः । यथा प्राज्ञस्यानन्दः सारभूतो गुण इति प्राज्ञ आनन्द-शब्देन व्यपदिश्यते' इति तत्सूत्रभाष्यम् । गुणेषु सारभूतं ज्ञानम् । ज्ञाना वस्थाभेदेषु ज्ञानेषु सारभूता दया प्राणिनाम् । सैव खलु विश्वोपकारं दुग्धे । सर्वांश्चापराधान्क्षाम्यति । अतो दयास्तुतिरवश्यकार्या; प्रथमकार्या च ॥

वृषशैलाधिपतेः स्वभावभूता दया; यथा जलधेः शीतता । 'लोक-वत्तु लीलाकैवल्यम्' इति नप्रयोजनवत्त्वाधिकरणे । तदधिकरणभावप्रकाशि-कायामुक्तम्—ननु "केवलं लीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते । जन्म-स्थितिध्वंसादेर्लीलैव प्रयोजनम्" इति कन्तुकारम्भजन्मस्थितिध्वंसादेर्लीलाप्रयो-जनकत्वप्रतिपादकभाष्ये विद्यमाने तदनादरेण 'कन्तुकाद्यारम्भस्य लीलात्वं युक्तम्; यत्नगौरवाभावात् । जगद्व्यापारस्य तु लीलात्वमनुपपन्नम्' इति कथं व्यापारस्यैव लीलात्वकथनमिति चेत्— अत्र केचित्—'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥' इति माण्डूक्यश्रुतौ सृष्टेर्लीलार्थत्वस्य परपक्षत्वोपन्यासात्, लीलाशब्दोऽत्रानायास-कर्मपरः । लीलामात्रमेतस्य भारत्रयधान्यवहनमिति तत्रापि प्रयोगदर्शनात्, यथाङ्गुलिचालनादयोऽनायाससाध्याः क्रिया न प्रयोजनापेक्षाः, अत एव न तत्र प्रयोजनप्रश्नः, तत्प्रश्नेऽपि तूष्णीमेवोत्तरम्; एवं परमात्मनोऽप्यनायास-साध्या सृष्ट्यादिक्रिया न प्रयोजनापेक्षा; अत्र चाखिलभुवनजन्मस्थेमभङ्गादि-लील इत्याद्यपद्यस्यैव साक्षित्वात् 'केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भाः । ध्वंसादेर्लीलैव प्रयोजनम्' इति भाष्यस्यापि स्वस्य स्वयं दास इतिवत्स्वस्य स्वयमेव प्रयोजनमित्यर्थे तात्पर्यमित्येवाचार्याभिप्राय इति वर्णयन्ति—इति ॥

यद्यपि समाधानग्रन्थस्य केचिदित्युपक्रमः, समाधानान्तरस्यानुक्ते-रुक्तसमाधाने संमतिः स्यादिव । लीलासूत्रस्य बहुधा व्याख्यानमद्वैतग्रन्थेषु । 'लीला क्रिया विलासश्चेति स्मरणाल्लीलाशब्दस्य क्रियामात्रं विलासरूपक्रिया चेत्यर्थद्वयं संभवति । 'लीलाशब्दस्य क्रीडावाचिता क्रियामात्रवाचिता च । क्रियामात्रे शक्तिमवलम्ब्यानायाससाध्यक्रियालक्षकता च' इति परिमले ।

"नैवैतदेवं यदि प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता भवेत् । ततस्तन्नि-वृत्तौ निवर्तेत, शिंशुपात्वमिव वृक्षतानिवृत्तौ । न त्वेतदस्ति । प्रेक्षावतामननुसंहितप्रयोजनानामपि यादृच्छिकीषु क्रियासु प्रवृत्तिदर्शनात् । अन्यथा 'न कुर्वीत वृथा चेष्टाम्' इति धर्मसूत्रकृतां प्रतिषेधो निर्विषयः प्रसज्येत । न चोन्मत्तान्प्रत्येतत्सूत्रमर्थवत् । तेषां तदर्थबोधतदनुष्ठानानुपपत्तेः । अपि चादृष्टहेतुकोत्पत्तिकी श्वासप्रश्वासलक्षणा प्रेक्षावतां क्रिया प्रयोजनानुसन्धानमन्तरेण दृष्टा ।....यथा च स्वार्थपरार्थसंपदासादितसमस्तकामानां कृतकृत्यतयाऽनाकुलमनसामकामानामिव लीलामात्रात्सत्यप्यनुनिष्पादिनि प्रयोजने नैव तदुद्देशेन प्रवृत्तिः । एवं ब्रह्मणोऽपि जगत्सर्जने प्रवृत्तिर्नानुपपन्ना । दृष्टं च यदल्पबलवीर्यबुद्धीनामशक्यमतिदुष्करं वा तदन्येषामनल्पबलवीर्यबुद्धीनां सुशकमीषत्करं वा । न हि वानरैर्मारुतिप्रभृतिभिर्नगैर्न बद्धो नीरनिधिरगाधो महासत्त्वानाम् । न चैष पार्थेन शिलीमुखैर्न बद्धः । न चायं न पीतः सङ्क्षिप्य चुलकेन हेलयैव कलशयोनिना महामुनिना । तस्मादुपपन्नं यद्धेलया वा, स्वभावाद्वा, लीलया वा जगत्सर्जनं भगवतः ।" इति तदधिकरणभामतीसिद्धान्तग्रन्थः । 'क्रियामात्रार्थत्वमादाय यादृच्छिकाङ्गुलिचलनादिक्रियायां स्वाभाविकश्वासनिमेषादिक्रियायां च प्रयोजनोद्देशरहितायां व्यभिचार उक्तः ।........ सुखितस्य सुखानुभवप्रयुक्ता हासगानादिरूपा प्रयोजनोद्देशरहिता दृश्यते । न हि तत्र प्रयोजनमण्वपि संभावयितुं शक्यते । दुःखोद्रेके रोदनवत्सुखोद्रेके हासगानादेः प्रयोजनोद्देशरहितस्य सर्वानुभवसिद्धत्वात् । अत एव हसितरुदितादिषु कारणमेव पृच्छन्ति; न प्रयोजनम् । ............... लीलायादृच्छिकस्वाभाविकक्रियासु च व्यभिचार इत्यर्थः । 'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥' इति माण्डूक्योपनिषदि तात्कालिकानन्दप्रयोजनलीलात्वमेव क्रीडार्थं सृष्टिरित्यन्य इत्यनेनानभिमतं प्रदर्शितम् । न तु हासगानादितुल्यप्रयोजनोद्देशरहितं लीलात्वम्' इति परिमले ॥

भावप्रकाशिकोक्तं समाधानमुदाहृताद्वैतग्रन्थोक्तानुसारीव । क्रीडापक्षं भोगपक्षं च विहाय स्वभावपक्षे विश्राम्यतीव माण्डूक्यश्रुतिः । पक्षान्तरपरिग्रहे हेतुश्चोक्तः 'आप्तकामस्य का स्पृहा' इति । स्वभावस्यापर्यनुयोज्यत्वम् । देवस्य स्वभावो दयमानता । 'जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभावभूता' । दयया परार्थं सृष्टिः । स्वभावपक्षश्च दयापक्षे पर्यवस्यति । 'यथा प्रयोजनोद्देशं विनापि दहनस्य दाहकत्वम्, मत्तस्य सुखोद्रेकादिनैव नृत्तगानादि, प्रेक्षावतोऽपि प्रवचनादिकाले हस्ताङ्गुल्यादिव्यापारः, एवमीश्वरस्यानन्दोद्रेकेण स्वभावेन परप्रयोजनोद्देशेन च केवललीलारूपा सृष्टिः' इति श्रीमन्मध्वभाष्यव्याख्यायां सूत्रार्थमणिमञ्जर्यां स्वभावपक्षे विश्रान्तिः प्रदर्शिता लीलासूत्रस्य । 'देवस्यैषः—' इति देवस्यैष इच्छाविषय इति सृष्ट्यादिविषयः स्वभाव एव न प्रयोजनाय भवतीति च श्रुत्यर्थो वर्णितस्तत्र । द्वितीयदशके— 'आसृष्टिसन्ततानाम्—' इति श्लोकव्याख्यानोदाहरिष्यमाणगीताभाष्यतात्पर्यचन्द्रिकावाक्यान्यपि दयास्वभावमूलप्रपञ्चसृष्टिपक्षानुकूलानि । दयया सृष्टिः । दयया प्रलयः । यदि दयया जन्मस्थितिभङ्गनिर्वाहः सर्वाभ्युपगतः, यदि च दयाया देवस्वभावत्वमभ्युपगतम्, केवलदयास्वभावमूलत्वेन परिहारः प्रयोजनवत्त्वाभावचोद्यस्य स्वरसः । यदि दयया परिहारो लीलासूत्रे कथमनन्तरसूत्रे नैर्घृण्यशङ्कोत्थितिरिति चेत्—उच्यते । स्वाभाविक्या दययैव सृष्ट्यादौ प्रवर्तते भगवान् । सर्वं सुखमयं च सिसृक्षति । सृष्टसमस्तपदार्थजातस्यानुकूल्यमेव स्वभावतः । तेषां दुःखहेतुत्वं नेश्वरापराधः; किं त्वसत्कर्मापराधः । स्वाभाविकी दया प्राणिकर्मणा निरुध्यते । ततो वैषम्यं नैर्घृण्यं च प्राणिकर्मसापेक्षम् । प्राणिदुःखनिराचिकीर्षया सृजति भगवानिति सर्वसंमतम् । तथा च दयया सृष्टिः । 'वरद निजेच्छयैव परवानकरोः' इति भट्टपादाः । '—जन्तूनवलोक्य जातनिर्वेदा । करणकलेबरयोगं वितरसि....करुणे त्वम्—' इत्याचार्याः । लीलासूत्रं यथा तथा वा व्याख्यायताम् । सृष्टिप्रलयादेर्दयामूल-

न केऽपि सन्दिह्युः । कार्यसामान्यस्य दयामूलत्वम्; हितत्वं च वर्ण्यते तत्र तत्र स्तोत्रे ।

'कारुण्यं करुणा घृणा । कृपा दयाऽनुकम्पा स्यादनुक्रोशः' इति दयानामानि । प्रायेणैते शब्दा अत्र प्रयुज्यन्ते । कृपणे कृपा । दूयमाने दया । दूयमाना च दया । अनुकम्पाशब्देऽस्ति भूयः स्वारस्यम् । कम्पनाद्विति सौत्रं ब्रह्मलिङ्गप्रदर्शनम् । 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतमिव य एतद्विदुरमृतास्ते भवन्ति ॥' इति काठकं वचनं तत्सूत्रविषयवाक्यम् । मरुत्तरणिपावकादयो लोककम्पयितारः कम्पन्ते भगवतो 'भीषा' । सर्वकम्पककम्पयिता भगवान् यं कंचित्प्राणिनं कम्पमानमनुकम्पते । क एष दयाप्रभावः, यत्सर्वकम्पयितृकम्पयितारमीश्वरमपि कम्पयति । अच्युतमपि चालयति । अनुकम्पाशब्दे ईदृशं स्वारस्यमस्तीति रसिकैर्भाव्यम् । 'तमेव भान्तमनुभाति सर्वम्' । भानं भगवतोऽसाधारणं निरुपाधिकम् । तद्भानमनु भानं सर्वस्य । कम्पोऽसाधारणः प्राणिनः । भगवतः स्वतः कम्पस्य न प्रसक्तिः । प्राणिकम्पमनु स कम्पते । एतत्स्वारस्यमुद्दिश्य 'श्रीनिवासानुकम्पया' इत्यनुकम्पाशब्दः प्रायुज्यतेव स्तोत्रारम्भे । 'सन्तः स्पृशन्तु सदयैर्हृदयैः स्तुतिं ते' इति सदयत्वेन हृदयस्य हृदयत्वं द्योत्यत इव पादुकायाम् । दयाशतकमिदं स्तोत्रम् । दयासहस्री पादुकासहस्रम् । निर्दयं चेद्धृदयं न तद्धृदयसंज्ञामर्हति । मातृनामग्रहणवद्रस्यतया प्रतिश्लोकं दयासंबोधनमिति श्रीमद्रामानुजार्याः ।

दशदशकयुक्तमिदं स्तोत्रम् । 'नातः परम्—' इति शततमश्लोकेन समाप्तप्रायं स्तोत्रम् । अनन्तरश्लोका नैच्यानुसन्धानपराः सात्त्विकत्यागकराः फलादिबोधकाश्च । प्रतिदशकं प्रतिपाद्यप्रधानार्थभेदो निरूपणीयः । यद्यपि 'झञ्झामारुतधूतचूतनयतः सांपातिकोऽयं क्रमः' इति युगपदेव सर्वेषां श्लोकानां, खलेकपोतन्यायेन स्वबुद्धौ सिद्धत्वं द्योत्यत इव; तथापि सर्वज्ञैराचार्यैः सङ्गतिविशेषविशिष्टक्रमेणैव स्तोत्रेण रचितेन भवितव्यम् । प्र-

तिदशकं वृत्तं भिद्यते । तच्च दशकभेदेन प्रतिपाद्यभेदं लिङ्गमिव । तत्तद्दशके तत्तद्वृत्ताश्रयणे निमित्तं तत्र तत्र यथामति प्रदर्शयिष्यते । प्रथमदशकमुपोद्घातभूतम् । स्तोत्रप्रतिज्ञा क्रियते दशमश्लोके 'अञ्जनाद्रीश्वरदयामभिष्टौमि निरञ्जनाम्' इति । श्रद्धातव्यशरण्यदम्पतिदयादिव्यापगाव्यापका गुरवः । दयां स्तोष्यताऽवश्यं गुरुपरम्परा नन्तव्या । न केवलं मङ्गलार्थं तन्नमस्क्रिया । तेऽपि श्रीनिवासदयापरीवाहाः । तन्नमस्क्रियाऽपि दयास्तोत्रे साक्षात्सङ्गता । तत्स्तुतिर्दयास्तुतिरेव.। देव्योऽपि दयामूर्तयस्तत्कार्यनिर्वाहिकाः । भगवानपि करुणावरुणालयः । सर्वथा दयात्मकत्वेन सर्वेषां निरूपणं प्रथमदशके । द्वितीये— दयायाः सर्वस्मात्परत्वम् , भगवतस्तद्वशत्वम् ; ब्रह्मलक्षणत्वेन प्रसिद्धसृष्ट्यादिसर्वोपकाराणां दयामूलत्वं चोच्यन्ते । तृतीये—दयया भगवते क्रियमाणा उपकाराः प्रस्तूयन्ते । दयाकारिता शरणागतरूपसस्यवृद्धिः कृषीवलभगवदानन्दकरी । अपराधचक्रवर्तिनां प्रतिमल्लानां जयस्तेषां श्रीनिवासपादसात्करणं च दयया साध्येते । चतुर्थदशके—दयाजितस्य बन्दीकृतस्य स्वस्यापराधचक्रवर्तिनः श्रीवेङ्कटगिरिनयनम् ; तत्र भगवत्सभायां दण्ड्यत्वमोच्यत्वविचारणादिकम् , वृषगिरिनिवासप्राशस्त्यं च प्रस्तूयते । सामाजिक्यो देव्यः; वावदूका दया; सर्वा दयनीयत्वक्षाम्यत्वपक्षपातिन्य । भगवानेक एवापक्षपाती । सोऽपि दयया विश्रमैः स्वीक्रियते । अतोऽपराधानां सहनमगणनं च निर्णीयते सभायाम् । सभ्यसचिवाधीनो निर्णयः । सर्वाः सभ्या देव्यो दयावश्यास्तत्पक्षीयाः । भगवानेकः किं कुर्यात् ? सोऽपि दययाऽन्ते वशीक्रियते । महद्भिर्गुणान्तरैस्तत्तदसह्यापराधप्रदर्शनेन दण्ड्यत्ववादः क्रियते । तत्र प्रतिवदति चतुरं दया । 'दया न कृत्रिमा । स्वाभाविकी सा । दिव्यस्थानान्मृदुर्वृष्टिरिव दया श्च्योतति । दयमानं दयनीयमुभावपि दयाऽनुगृह्णाति कल्याणपरम्पराभिः' इत्यादिरीत्या दयामहिमवर्णनं कृतं राजकीयन्यायसभायां वावदूकवेषधारिण्या युवत्येत्याङ्गलकविसार्वभौमः । अत्र दयैव दयनीयत्वपक्षवादिनी प्रतिवावदूका । अनेकभावि-

जन्मान्तरप्राप्तिर्न्याय्यो दण्डोऽपराधस्य । अपराधिभारवोढा प्रभुस्तज्जन्म-परम्परादण्डं स्वयं वहति दयानिदेशेन । 'वृषभाशस्त्रिरनीथस्त्वन्निदेशेन नूनं भजति शरणभाजां भाविनो जन्मभेदान् ।' अधिपतेर्दण्डः । दण्ड्यस्य मोक्षः । ईदृशी नयगतिर्दयाराज्ये । वेङ्कटगिरिं प्रापितस्तद्गिरिनिवासभाग्यं श्लाघते । 'अधिगतवृषशैलं पारमारोपयन्ती भवजलधिगतानां पोतपात्री भवित्री' इति दयया वेङ्कटगिरिप्राप्तिः सूच्यते । भवजलधिगतानां पोत-पात्रीति पोतरूपणं कुर्वन् 'भवजलधिगतानां द्वन्द्ववाताहतानां.......... भवति शरणमेको विष्णुपोतो नराणाम्' इति श्रीकुलशेखरीयत्वेन प्रसिद्धां मुकुन्दमालां स्मरति । 'नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे....तिष्ठति यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे भ्रुवमहो मूढा वराका वयम्' इति मुकुन्दमालाश्लोकः स्मृतिपथमायाति । तदनुसारेण 'त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे जगति गतिमिहान्यां देवि संमन्यते यः' इत्युच्यते तुरीयदशकान्ते । वेङ्कटगिरिगमनरुचिस्तत्र वासरुचिश्च प्रोक्ता चतुर्थे । तत्रैव जन्म काङ्क्ष्यते जग्मुषां तस्थुषां वा पञ्चमे दशके श्रीम-त्कुलशेखरमनोरथरीतिमनुसृत्य । मुकुन्दमालामनुसृत्य—'आज्ञां ख्यातिं धन-मनुचरान्' इति श्लोकः 'प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखम्' इति श्लोकश्च प्रणिन्याते । श्रीनिवासदयायाः सुरसिन्धुत्वमितरदयायाश्च मृगतृ-ष्णिकात्वं वर्णितं चतुर्थदशकान्ते । तदुभयमुपपाद्यते पञ्चमदशके । षष्ठद-शके प्रपत्तिं प्रस्तोष्यन्ननन्यगतिकत्वमनन्यदैवत्वं चोपपादयति पञ्चमान्ते । तदेवावतारितं चतुर्थान्ते 'त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे—' इति श्लोकेन । पापिष्ठस्यापि प्रपदनोपायः सुकर इति क्षत्रबन्धुप्रस्तावेन सूचयि-त्वा दयाया वात्सल्यप्रकाशनेन दशकमुपसंहरति । षष्ठदशके—प्रपत्तिप्रभा-वानुसन्धानपूर्वकं प्रपदनं क्रियत इति पूर्वमेवोक्तम् । कार्पण्यकाष्ठायाः प्रप-त्तावधिकार इति प्रथममेव सूच्यते षष्ठे 'अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीम्—' इति । 'मृदुहृदये दये' इति रक्षणप्रार्थना क्रियतेऽन्तिम-

श्लोके । सप्तमे—दयाया निरङ्कुशनिरतिशयप्रभावोऽनुसन्धीयते निर्भयत्वदार्ढ्याय । प्रपन्नस्य निर्भयत्वमावश्यकम् । अष्टमे....दयायाः स्वरूपम्; असमद्वशीकरणे उपकारक्रम इत्यादिकं वर्ण्यते । नवमे— दयावशेन भगवता क्रियमाणा अवताराः प्रदर्श्यन्ते । अवताराद्यनुसन्धानमुत्तरकृत्यम् । दशमे— अवधीरयन्तमपि वारयन्तमपि कुलिङ्गशकुनिवत्साहसिकमप्यनुग्रहशृङ्खलाभिर्बध्वा गृहाण, मुक्तानुभूतिमिहैव दापयति च दया प्रार्थ्यते ।

भगवत्कृपया प्रवृत्तस्यास्य स्तोत्रस्य चारुतानुभवो नैच्यानुसन्धानफलकथनादिकं चाष्टभिः श्लोकैः क्रियते । कतकमेतच्छतकमित्याचार्याः । केषां कतकमिति पृष्टे उत्तरं दीयते सदम्बूनामिति । तस्य च भाव एवं स्यादिति मन्महे । सच्चेदम्बु श्रोतृचेतसि तद्विशुद्धिकरं कतकं भवेत्स्तोत्रम् । निरम्बुनो हृदयस्य न शोधकं स्यात् । अम्बु च काव्यरसिकता सहृदयता । 'न कतकं पङ्कप्रसादनाय' इति वामनसूत्रे । यदि रसाम्बुलवोऽपि न स्यात्कथं तं प्रसादयितुं प्रभवेम । 'पङ्कच्छिदः फलस्येव निकषेणाविलं पयः' इति कालिदासः । पङ्काविलं पयः शोध्येत पङ्कच्छेदकेन कतकेन । न पयोलेशरहितं नीरसशुष्कपङ्कमात्रं कतकेन प्रसन्नतां नीयेत । नीरसप्रतिकोटिकः सदम्बुशब्दः । अर्थान्तरं तत्स्वारस्यं च द्रष्टव्यं श्लोकव्याख्यायाम् ।

'त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवान्' इत्याद्युपाख्यायते बृहदारण्यके । तान्प्रत्येकं द द द इत्युवाच प्रजापतिः । तस्य चाक्षरस्य दाम्यत दत्त दयध्वमिति तांस्तान्प्रति भावं व्यवृणोत् । 'द द द इति शिक्षेद्दमं दानं दयामिति' इति निगदितमुपाख्यानान्ते । असुरान्प्रति दयोपदेशः, तेषां दयाहीनत्वेन प्रसिद्धेः । 'दया सत्यं च शौचं च राक्षसानां न विद्यते' इति हनूमान् रामसकाशे । मनुष्येष्वेव देवादिस्वभाववन्त उपदिष्टाः स्युः । सर्वथा सर्वैस्त्रयमप्यभ्यसनीयम् । एवं च दयायाः श्रुत्यैवावश्योपादेयत्वोपदेशः । दानं च दयाप्रेर्यम् । क्रोधादिचित्तवृत्तिनिग्रहश्च

दयानिर्वर्त्यः ।

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः' इति करुणवेदिन ऋषेरानुष्टुभेन छन्दसा प्रवृत्ता आद्या दयानिस्यन्दभूता श्लोकसरस्वती । मानिषादः श्रीनिवासः, मा लक्ष्मीस्तस्मिन्निषीदतीति । आनुष्टुभेन छन्दसा मानिषादस्य श्रीनिवासस्य दयास्ताविका सरस्वती प्रक्रमते । प्रथमं दशकमानुष्टुभेन छन्दसा ॥

**प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया ।**
**इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्करायितम् ॥ श्रीः ॥**

प्रपत्तिप्रधानमिदं दयाशतकम् । प्रपदनेन स्तोत्रमुपक्रम्यते । प्रपदनं दयोत्तम्भकम् । अनुल्लङ्घनीयत्वात्पादप्रणामस्यार्यैः । 'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् । क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥' इति कविसार्वभौमो हिमवद्गिरिप्रपदनस्य साफल्यं वक्ति क्षुद्राणामपि । 'शरणागतमिवाधो निलीनं तिमिरसङ्घमवत्सु प्रदीपेषु' इति वासवदत्तायाम् । अमित्रमयोग्यतममपि तमो रक्ष्यते पादप्रणत्या । अयं पवित्रतमो गिरिः पापं दग्धुमेवावतीर्णः; इषीकतूलमिवाग्निः । अस्य गिरेः पादे प्रपदनं ध्रुवं भूतिकरं भवेत् । यदि वयं गिरिशिखरस्थभगवदालयादतिनीचभूते गिरिपाद एव प्रणमेम; ध्रुवं भगवान् गिरिश्च सुप्रसन्नौ भवेताम् । पापदहनदक्षो वेङ्कटगिरिः । प्रपत्तिः सर्वपापनिष्क्रिया । तत उचितं गिरिप्रपदनम् । गिरेर्दयामूर्तित्वोपपादनमावश्यकम् ; गिरेः पापविनाशनरूपदयाकार्यकारित्वात् । तत्र चास्ति महत्यनुपपत्तिः । कठिनकठिनः शिलामयो गिरिः । 'कैकेयि तस्य शयनानि कथं भवेयुस्त्वच्चेतसोऽपि कठिनानि शिलातलानि' इति दशरथः । कथं गिरिर्दयामूर्तिर्भवेत् ? इदमतिचारु समर्थ्यते आचार्यैः । घनीभूतेक्षुरसः शर्करा । शर्करामयो गिरिः । इक्षुश्च श्रीनिवासो भगवान् । तत्सारांशो रसो दया । औष्ण्याद्यनिष्टांशान्हित्वा तत्सारभूतदयारसमात्रं स्रोतस्त्वेन प्रवहति । ब्रह्मेक्षुरयमतिबृहन् ।

तत्सारोऽपरिमितः । अयमेव कृषीवलः, अयमेवेक्षुः । अयं शैलेशकृषीवलो गिरिशिखरे आत्मानं क्षेत्रेक्षुं प्ररोह्य ततो दयारसभूतेक्षुसारं प्रभूतं प्रवाह्य तं रसं घनत्वान्महत्त्वाच्च गिरिरूपेण परिणमय्य घनीकरोति । इक्षुरसमधुरस्रोतोरूपा दया । श्रीनिवासदयेक्षुसारस्रवन्ती घनीभूय शर्करायिता, तच्छर्करामयीयं गिरिमूर्तिरित्युत्प्रेक्ष्यते । कठिनस्यापि गिरेर्घनीभूतमधुरदयारसपरिणामत्वोत्प्रेक्षणेन शङ्कितानुपपत्तिः परिजिहीर्ष्यते । दया पापक्षमिका । गिरिः पापदाहकः । उभयोरेककार्यकारित्वादैक्योत्प्रेक्षोपपन्ना । श्लेषघटितेयमुत्प्रेक्षा न न सुश्लिष्टा ।

**प्रपद्ये** । साधूपक्रान्तं दयास्तोत्रं प्रपदनेन । प्रपदनोत्तम्भितदयाकल्लोलकोलाहलेन चोपसंहारः स्तोत्रस्य । प्रपदनफलं दयाकल्लोलकोलाहलः ।

**तं गिरिम्** । तदिति परोक्षे विजानीयात् । अपरोक्षेऽपि गिरौ परोक्षवन्निर्देशस्तन्निरवधिकमहिम्नोऽपरिच्छेद्यत्वेन परोक्षत्वात् । भगवत्यसाधारणस्तच्छब्दो गिरौ प्रयुज्यते । आदरतौल्यात् । दयाया गिरित्वेन परिणामस्तस्या गिरिवदप्रकम्प्यत्वं द्योतयितुम् । 'अप्रकम्प्यानुकम्पा' इति तात्पर्यरत्नावल्यन्ते । अनुकम्पाऽप्रकम्प्यगिरिर्भवति ।

**श्रीनिवासानुकम्पया** । दया च दिव्यदम्पत्योः । तच्च स्पष्टीक्रियतेऽन्तिमश्लोकान्तिमपादे 'दीनालम्बनदिव्यदम्पतिदया' इति । तदत्र सूच्यते । श्रीनिवासनामग्रहणेन दयाश्रयदैवतनिर्देशः । दैवतं दम्पती । अनुकम्पाशब्दस्वारस्यं पूर्वमेवोक्तम् । अनुकम्पेति दुःखनिराकरणेच्छासंरंभस्योक्तिः । कम्पवानयं महान्दयारम्भः । 'न मुख्यः कल्पः किन्त्वनुकल्प' इत्यादाविवानूपसर्गेण कम्पस्य न मुख्यत्वम्; किन्तु संरंभमात्रत्वमित्यपि व्यज्यते । एवं च दयाया न दुःखरूपत्वम् ।

**इक्षुसारस्रवन्त्येव** । 'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥' इति दण्डिवचनमुदाह्रियते निक्षेपरक्षायाम् । अत्रेक्षुः श्रीनिवासः । इक्षुक्षीरे ति श्लोके इक्षोः प्रथमग्रहणम् ।

'चिन्ता च द्रुतशर्करामतिनिधिः शीताश्रुणी लोचने' इति मधुरिमवर्णनं भगवच्चिन्ताप्रवाहस्य । माधुर्यस्वभावममुना दयेति सर्वसंमतम् । तस्या आनन्दघनत्वाविरोधिता, निर्दुःखता चाचार्याभिप्रेते । अतः दयाया मधुरमधुरत्ववर्णनं प्रथममेवेति रसिकैर्भाव्यम् । दयाया मूर्तिः, दयायाः स्वरूपं; दयायाः शरीरम् । शर्करायितं दयाशरीरं मधुरं दुःखगन्धरहितम् । ज्ञानावस्थासु दया सारभूता । तद्व्यज्यते सारशब्देन । 'शर्करां पादजिह्वाभ्यामक्षिरोगी विवर्जयेत्' इति वचनमुदाहृत्योक्तं निक्षेपरक्षायाम् । 'अनेकार्थेष्वप्येकशब्दसंग्रहवशाद्व्यवस्थासिद्धिः' इति । शिलाशकलं पदा नाक्रामेज्जिह्वयेक्षुविकारं वर्जयेदित्यर्थः । सैन्धवघनोपमितो भगवान् श्रुत्या । शर्कराघनोऽयं दयारसघनो गिरिरित्यस्य भगवतोऽपि वैलक्षण्यम् । 'अनन्तरोऽबाह्यः कृत्स्नो रसघनः प्रज्ञानघन आनन्दघनः' इति ब्रह्मस्वरूपवर्णनं दृश्यते । 'ब्रह्मणि श्रीनिवासे' 'ब्रह्मशब्देन चानवधिकातिशयं ब्रह्म श्रियः पतिः पुरुषोत्तमोऽभिधीयते' इति च भाषितत्वाद्ब्रह्म श्रीनिवासः ।

दयामूर्त्या शर्करायितमिति-दयास्वरूपस्य मधुरघनत्वं व्यज्यते । अनन्तरमबाह्यं कृत्स्नं मधुरघनमानन्दघनं दयास्वरूपम् । यथा भगवांस्तथा तस्य प्रधानगुणः । न दयायां दुःखलवोऽपि । विश्वस्य सारभूतो भगवान् । तस्मिंश्चौष्ण्याद्यसदनिष्टांशं पृथक्कृत्य तद्धित्वा सारस्य ब्रह्मणः सारतमदयांशमात्रं निष्पीडनेन लब्ध्वा तत्प्रस्नाव्यते । 'निष्पीडितेन्दुकरकन्दलजोऽनुसेकः', इतिवदयं वृषगिरिशिखरस्थितश्चन्द्रो निष्पीड्यते । इक्षुरसस्तसतामानीय शर्कराखण्डरूपेण परिणम्यते । द्रवावस्थायां न तस्य लेह्यताऽभिगम्यता वा, निरतिशयौष्ण्यात् । घनीभूतदशायामेव तस्याः स्वाद्यत्वम् । गिरिभूतावस्था औष्ण्यरहिता काष्ठागता दया भवेदित्यपि शर्करागिरित्वरूपणं दयायाः । गुडवदास्वाद्योऽयं गिरिः पूर्वाचार्याणाम् ।

**यन्मूर्त्या** । यस्य गिरेर्मूर्त्या । भगवदर्चामूर्तिवदभ्यर्हितत्वं गिरेर्मूर्तिशब्देन व्यज्यते । शब्दशक्तिमूलध्वनिः । यच्छब्दोपनिबद्धं वर्णनं गिरेः,

यथा भ्रमणः ॥

**प्रायः शर्करायितम्** । शर्करामयः शिलामयोऽयं गिरिरिति माऽवमंस्थाः । श्रीनिवासदयेक्षुसारस्रवन्ती घनीभूय शर्करायिता गिरिवद्वित्ताल्पत्वप्रख्यापनाय । भगवद्वन्दनं स्वात्र गिरिवन्दनपूर्वकम् । शर्करामूता गिरिः स्वशिखरस्थितं श्रीनिवासं स्वादयतीव । इदमपि प्रयोजनं सिध्यति शर्करात्ववर्णनेन । चक्षुषा लिह्येयमं शर्करागिरिमिति मनोरथः । प्राय इति भूयो भूय इति वाऽर्थः । तथा च 'भूयो भूयः पुलकनिचितैरङ्गकैरेधमानाः' इतिवदनुभवो गिरिविषये । भगवत इक्षुस्वरूपत्वं कृतं परकालमुनिभिः । इक्षुर्मन्मथचापः । अत्र मन्मथमन्मथ एवेक्षुः । श्रीनिवासनिवासभूतस्य गिरेर्मधुरशर्करात्वेनानुभवो यथार्थानुभवः । अन्यथानुभवोऽयथार्थो गुडे तिक्तानुभव इव । तस्य च मूलरज्ञानरूपपित्तदोषः स्यात् । 'पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस' ॥ श्रीः ॥

> **विगाहे तीर्थबहुलां शीतलां गुरुसन्ततिम् ।**
> **श्रीनिवासदयाम्भोधिपरीवाहपरम्पराम् ॥ २ ॥**

इक्षुसारस्रवन्त्युक्ता । न तत्रावगाहनं संभवेत् । 'महाह्रदः' इति भगवन्नाम पठ्यते सहस्रनामसु । 'पुण्यकृतां च गाहं गाहं सुतृप्तानामपुनरुन्मज्जनं मज्जयितृत्वया च महांश्चासौ ह्रदोऽगाधजलाशयः' इति सहस्रनामभाष्योक्तरीत्या शीतलानन्दह्रदः श्रीनिवासः । तस्य च शीतलत्वं दयां विना न संभवेत् । यया शीतलत्वं तस्या एव शीतह्रदत्ववर्णनं सरसम् । अत्र दयामूर्तेर्वेङ्कटगिरेः स्यन्दमाना दयास्रोतस्विनी गुरुपरम्परा । तत्रासदवगाहनाय बहूनि तीर्थानीव बहवो गुरवः । 'अभिगतशिशिरान्' इत्याचार्याणां शैत्यवर्णनं तात्पर्यरत्नावल्याम् । गिरिर्नमस्कृतः । गुरवो नमस्क्रियन्ते ॥

**विगाहे** । विगाहनं चाचार्यधीवृत्तिप्रवाहभूतशीततमगहाअन्वेषु

मज्जनमपि स्यात् । आचार्यसम्बन्धीप्रवाहेष्ववगाहनम् । 'गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम्' इति कादम्बर्यां भट्टबाणः।

तीर्थबहुलाम् । यथा गङ्गायां बहवः सोपानावतरणिका भवन्ति ।

शीतलाम् । शीतकान्ता मधुरमधुरा आचार्यान्तस्सरसत्वञ्च ।

गुरुसन्ततिम् । दयानन्तनिर्गुरुसन्ततिः ।

श्रीनिवासदयाम्भोधिपरीवाहपरम्पराम् । प्राण्यार्तिबाहुल्येन सततवर्धमाना दया कूलमुद्रुजा भवति । 'पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया' इति रामविषये भवभूतिः परीवाहेनैव हृदयधारणसंभवं वक्ति । दयापूरोत्पीडे परीवाह एव शरणम् । परीवाहश्च तीर्थभूताचार्यरूपेण । परीवाह इत्युत्तररामचरितश्लोकप्रत्यभिज्ञापनम् । शरण्यदम्पतिदयादिव्यापगाव्यापकत्वमाचार्याणां स्वयं तीर्थीभवनेन । तीर्थकराणामाचार्याणां तीर्थीभवनं न्याय्यम् ॥ २ ॥

कृतिनः कमलावासकारुण्यैकान्तिनो भजे ।
धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥ ३ ॥

अवगाहनं प्रस्तुतम् । श्रीनिवासदयाम्भोधौ मग्नास्तु सर्वजनमज्जयितारोऽभिनवदशावतारभूताः पराङ्कुशादयः ।' 'प्रसन्नशीताशयमग्ननाथाः-' इति श्रीरङ्गराजस्तवे । अनन्तोऽपि नाथः सूक्ष्मसूक्ष्मे तच्छीतमनसि मग्नो भवति । अवगाहयितृत्वकौशलं कृतिनां तेषां कृतीनाम् । तन्नमस्कारः क्रियते । नाथोपज्ञं प्रवृत्तमसद्दर्शनम् । दर्शनस्थापकत्वरूपतीर्थकरत्वं नाथतद्वराणाम् । श्रीशठकोपादीनां मूलप्रमाणभूतसंहितादिद्रष्टृत्वम्; ऋषिवत् । अनन्तीर्थकरगुरुपरम्परातः पृथक्त्वेन तन्नमस्क्रिया ।

कृतिनः । 'पराशरप्रबन्धादपि वेदान्तरहस्यवैशद्यातिशयहेतुभूतैः सद्यः परमात्मनि चित्तरञ्जकतमैरुपब्रह्मणैर्मधुरकविप्रभृतिसंप्रदायपरम्परया नाथमुनेरुपकर्तारं परांकुशमुनिं प्रणमति' इति स्तोत्रभाष्ये । सर्ववर्णार्हवेदसंहितारूपकृतिमतः । कृतं ग्रन्थकरणं येषामस्तीति कृतिनः ।

कृतिनः कर्तव्यशेषरहिताःनिति वा ॥

**कमलाकान्तकारुण्यैकान्तिनः ।**

श्रीनिवासदयैकान्तिन इमे परमैकान्तिनः । दयां स्तोष्यता दयैकान्तिना भाव्यम् । तदैकान्त्यं विना कथं सा सम्यक्स्तूयेत । दयैकान्तिना स्तावकेन दयैकान्तिनः स्तुत्याः ॥

**भजे** । निरन्तरं निरतिशयप्रीतिबहुमानपूर्वकं स्मरामि । यद्यपि भगवति वयं प्रपन्ना न भक्ताः; परं तु वयं भजनमेवाद्रियामहे । तद्भजनं विना कथं श्रीनिवासदयाविषयेऽनन्यमनस्कत्वसंभवः ॥

**धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ।** अवटतटवैषम्यरहिता दया । न दयाक्रान्तानि किंचिदपि वैषम्यं दृश्यते । यथा नैर्घृण्यं न सहेत दया, तथा वैषम्यमपि । दयैकान्तिनां सूक्तयो न मनुष्येष्वधिकारिवैषम्यं सहेरन् । 'मनुष्याधिकारं शास्त्रम्' । मातापितृसहस्रेभ्यो वत्सलतरं शास्त्रमित्युच्यते । अत्रैवर्णिका भूयांसः । विरलास्त्रैवर्णिकाः । मातृवद्वत्सला दया नीचेषु सुतेषु विशेषतः स्निह्येत् । 'मन्ये माता जड इव सुते वत्सला मादृशे त्वम्—' इति वक्ष्यते । 'नावेदविन्मनुते तं बृहन्तम्' इति श्रुतिः । यदि सर्वमनुष्याधिकारिकद्राविडवेदो न प्रवर्त्येत, वेदस्य मातृस्वभावो न सिद्ध्येत् । किमुत मातृसहस्रवात्सल्यम्; तदधिकं वा । त्रिवेदा एवाचरा प्रकृतिर्द्राविडी ब्रह्मसंहिता । निर्दयत्वमवत्सलत्वं च परिह्रियेते शास्त्रस्यैषां सर्वयोग्यया ब्रह्मसंहितया । वात्सल्यभूयिष्ठत्वात् 'माता, पिता—' इत्याद्यनुसन्धानं श्रीशठकोपविषये स्तोत्ररत्ने ॥३॥

**पराशरमुखान्वन्दे भगीरथनये स्थितान् ।**
**कमलाकान्तकारुण्यगङ्गाप्लावितमद्विधान् ॥ ४ ॥**

पराशरमात्रप्रणामः स्तोत्ररत्ने । अत्र पराशरपाराशर्यशुकादीनां वन्दनम् । भक्तियोगप्रवर्तकानां तेषां सर्वेषां तुल्यत्वात् । परांकुशं नम-

स्कृत्य पराशरं नमस्करोति । परान्सत्तर्कशरैराशृणातीति पराशरः । भक्तौ न तावती दयापेक्षा, यावती प्रपत्तौ । अतः पराङ्कुशादीनां दयैकान्तिनां प्रथमनिवेशोऽत्र दयास्तवे । 'गरीयसोऽपि भगवत्प्रसाद एव फलहेतुर्लघीयसि किं दण्डवारितः' इति श्रीमद्भट्टपादाः । भगवत्कारुण्यं भूयः प्रकटयन्ति पराशरादयः । तत्कारुण्यगङ्गयाऽस्मान्प्लावयन्ति च । 'भक्त्याऽपि भगवद्दया उत्तम्यते । सा चेदकिञ्चने प्रपन्ने स्वयमेवोत्तम्येत । अपि भक्तिसाध्यां तामीश्वरस्वभाव एव निर्वर्तयतीत्यनुपायानां स एवोपायः' इति निक्षेपरक्षायाम् । भक्तिसाद्ध्या दया । प्रपन्नेपु सा स्वयमुदेति ॥ ४ ॥

**अशेषविघ्नशमनमनीकेश्वरमाश्रये ।**
**श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थितम् ॥ ५ ॥**

श्रेयांसि बहुविघ्नानि । न दयास्तवात्परमं श्रेयः । तस्य चोत्तमश्रेयसो विघ्नबाहुल्यं नियतम् । ईश्वरमिथुनादनन्तरं विष्वक्सेनः प्रथमाचार्यः । विघ्ननिहननाय तस्य सेनाभूता द्विरदवक्त्राद्याः पारिषद्या विष्वगासते । तादृशस्यानीकस्येश्वरत्वं सर्वविघ्नहननसामर्थ्योपपादकम् ॥

**अशेषविघ्नशमनमनीकेश्वरमाश्रये** । विघ्नशमनमित्युक्ते गणनाथस्य प्रतीतिः स्यात् । तद्व्यावृत्तिरिष्यते 'अनीकेश्वरम्' इति ॥

**श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थितम्** । भगवद्दयाम्भोधौ बहवः परीवाहाः । तत्रोपदेशरूपकरुणाप्रसरभूता काचित्सारणी । विष्वक्सेनस्तत्स्रोतो भवति । शिक्षारूपकरुणास्रोतः सः । आचार्यकरूपकरुणासारणी सः । भगवत्करुणाम्भोधेः साक्षादुत्थितः स इति व्यज्यते 'उत्थितं' इति । शिक्षाशब्देन स्वालित्ये ललितं शासितृत्वमपि द्योत्यते । स्खलने शासनमपि दयाव्यापारः । 'दीर्घबन्धुं दयालुं स्वालित्ये शासितारं—' इत्याचार्यलक्षणमुपनिबद्धम् । 'विष्वक्सेनविहारवेत्रलतिकाकम्पः—' इति विहारवेत्रलतिकास्पन्दनेनैव शिक्षयति । वेत्रलता न दण्डः । विहारवेत्रलता न ताडकवेत्रलता । लतिका न

लता । कम्पमात्रं न ताडनम् । एवं दयैकान्त्यं चास्मिन् शिक्षणेऽपि । 'स्वयं निसृष्टात्मभरेण प्रियेण सेनापतिना---' इति स्तोत्रग्रन्थे । 'श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम् ---' इति गद्योक्तिभक्तानां स्वामिनैवाविघ्नप्रशमने परिजननियोगादौ च योजनीयेति' स्तोत्रभाष्ये । 'बुधेषु विततात्मधुरे---' इति वक्ष्यमाणरीत्या दयाभरोऽस्मिन् गुरुपरम्परायां च न्यस्तः ॥५॥

**समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् ।**
**श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥ ६ ॥**

'सेनेशं श्रियम्---' इति क्रमः । नित्यमज्ञातनिग्रहेयं नृतिरेत्री दया बहिष्कृतनिग्रहेयम् । न मातुरधिका दया कुत्रापि दृष्टचरी ॥

**समस्तजननीं वन्दे** । वन्दे लोकमातरम् ॥

**चैतन्यस्तन्यदायिनीम्** । अप्राकृतमातेयं न क्षुद्रं प्राकृतं स्तन्यं दधाति । चैतन्यरूपप्राणस्तन्यं ददाति । चैतन्यस्तन्यदायित्वेन जननीत्वोपपादनम् । चैतन्यदायित्वेन गुरुत्वोपपादनम् । मातृत्वम्; गुरुत्वमित्युभयमप्युपपाद्यते । आकारद्वयेन करुणामूर्तित्वसिद्धिः । 'स हि विद्यातस्तं जनयति । शरीरमेव मातापितरौ जनयतः' इति विद्याप्रदातृत्वेन जननीत्वं वा ॥

**श्रेयसीं श्रीनिवासस्य** । नाम्न्यपि तया विश्लेषं न सहतेऽयं देवः । नाम्न्यपि नित्ययोगस्तया । श्रियाध्युषितवक्षस्त्वेन वर्णनं श्रीशठकोपमुनिभिरेतत्स्थपदनगाथायाम् ॥

**करुणामिव रूपिणीं** । दया आत्मा । श्रीविग्रहश्च दयाशरीरम् । करुणाया बिम्बत्वं श्र्यादीनां प्रतिच्छन्दत्वं चोत्तरत्र वक्ष्यते ॥६॥

**वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम् ।**
**तत्कृपाप्रतिघातानां क्षमया वारणं यया ॥७॥**

दयाप्रभेदः क्षमा । क्षमा चापराधसहिष्णुता । तिसृभिर्देवीभिर्दयाधुरंधरत्वे कर्तव्यविभागः क्रियते । नीला दोषादर्शनं संपादयति । यदि कदाचिद्दोषो दृष्टिपथं गच्छेत् स क्षमयिष्यते क्षमया विश्वधारिण्या । अपराधे

क्षान्तेऽप्यौदासीन्यं स्याद्भगवतः, न स्वजनताभिमानः । औदासीन्यं निर स्य स्वजनयत्यपराधिजनं माता श्रीः । 'स्वजनयसि माता तदसि नः-' इ- ति भट्टपादाः । तदेव मातृत्वमुक्तं 'जननी' इति पूर्वश्लोके ॥

**वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम्** । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ—।' इयमपि महिषी, यथा श्रीः । विश्वधारिणी स- र्वंसहा । 'या बिभ्रती स्थिरचरात्मकमेव विश्वं विश्वंभरा परमया क्ष- मया क्षमा च । तां मातरं च पितरं च भवन्तमस्य व्युच्छन्तु रात्रय इमा वरिवस्यतो मे ॥' इति श्रीवैकुण्ठस्तवीयं पद्यमिह भाव्यम् ॥

**तत्कृपाप्रतिघातानाम्** । सहजा स्वयं प्रवहन्ती भगवत्कृपा । सा तु प्रतिहन्यते बलात्प्राण्यपराधैः । यद्यपराधाः क्षम्येरन् भगवत्कृपा निष्प्रतिघं प्रसरेत् ॥

**क्षमया वारणं यया** । यया क्षमया वारणम् । अपराधानां क्षमयैव वारणम् । क्षमाशब्दो भूमिवाचकः क्षान्तिवाचकश्च । ना- स्माभिरपराधकरणाद्विरम्येत । अतः क्षमामूर्तिः क्षमा क्षमया सहते । क्षमामूर्ति- त्वं क्षमानाम्नैव गम्यते । परिकराङ्कुरालङ्कारः । साभिप्रायं विशेष्यम् । 'भूमिःश्रु तीनां भुवनस्य धात्री गुणैरनन्ता विपुला विभूत्या । स्थिरा स्वयं पालयितुं क्षमा च सर्वंसहा शौरिपदावनि त्वम्॥'इति पादुकासहस्रे भूमिसाम्यवर्णनं पादुकायास्तदनेकनामसंभवप्रदर्शनेन ॥७॥

**निशामयतु मां नीला यद्भोगपटलैर्ध्रुवम् ।**
**भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम् ॥ ८ ॥**

नीलाकटाक्षाः प्रार्थ्यन्ते । तरुणीभोगाधिक्येन नेत्रयोः पटलरूपोऽ दर्शनापादको रोगः स्यादिति प्रसिद्धम् । भोगाधिक्येन नायकं विमोह्य तस्य पटलरोगमसङ्गमप्यापाद्य प्रजादोषादर्शनं विधाय दण्डधरदण्डाद्रक्षति प्रजाः । विचित्रेयं माता । एतन्मातृकटाक्षा मयि निपतन्तु ॥

**निशामयतु मां नीला** । माता नीला कटाक्षयतु माम् । नीला

निशामयन्नित्युक्तया तद्वर्ती न निशामयतीति व्यज्यत इति गतिकर्माव्ययम् । भर्तुरदर्शनं खलु कांक्ष्येन

यज्ञांगपटलैः । विविधविचित्रभागपरम्पराभिः । भोगपरम्परा भोगपटलम् । अतिभोगजनितपटलरोगैः । पटलश्चक्षुरावारकः । महत्तमपि चक्षुरपि पटलैरावियन्त इति बहुवचनार्थः । वशीकरणोपायपरम्परा चोक्ता श्रीवत्साङ्कमिश्रैः 'भोवरुदारमधुरैर्विविधैर्विलासैः भ्रूविभ्रमस्मितकटाक्षनिरीक्षणैश्च । या त्वन्मयी त्वमपि यन्मय एव सा मां नीला नितान्तमुररी कुरुतामुदारा ॥' इति । इदं पद्यमाचार्यबुद्धौ परिवर्तत इव ॥

ध्रुवम् । एवमुत्प्रेक्षामहे । ध्रुवं भावितामिति वाऽन्वयः । अदर्शनं दृढं भाव्यते भगवता । मुधोऽवकल्कने । अवकल्कनं चिन्तनम् ॥

भक्तदोषेषु । भक्तशब्देन भक्तप्रपन्नयोरुभयोर्ग्रहणम् । 'फलसाधनभक्तिभ्यां भक्तावपि च तावुभौ ।' बहुवचनेन दोषाणामसंख्येयत्वेऽपि नैकोऽपि दोषो दृष्टिपथं गच्छतीति रक्षणातिशयव्यञ्जनम् ॥

**श्रीनिवासस्यादर्शनं भावितम्** । श्रीनिवासः सर्वज्ञः सर्वदृक् । सर्वविद्यामयी श्रीः । सर्वदृशोऽप्यसंख्येयदोषादर्शनमापादयति । केयं चातुरी । किमिदं वात्सल्यम् । भावितामित्यभिनीतमित्यप्यर्थो ग्राह्यः । 'कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम्—' इत्युत्तरत्र । 'पश्यन्नपि न पश्यति' । अयं तु विविक्तं पश्यन्नपि 'क्षमया पृथिवीसमः' इत्युक्तगुणविशेषेणापश्यन्निव भवतीति मुग्धत्वोपचारः' इति स्तोत्रभाष्ये मुग्धशब्दव्याख्यानम् ॥८॥

**कमप्यनवधिं वन्दे करुणावरुणालयम् ।**
**वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥ ९ ॥**

प्रथमगुरुर्भगवान्वर्ण्यते । सोऽपि दयासागरत्वेन रूप्यते । दयास्तोत्रमध्यपतितत्वात् । सर्वथा दयायाः प्राधान्यं न विहन्यते । सागरे शैलः स्याद्यथा मैनाको महोदधौ । शैलोपरि सागरो व्यक्तिं गच्छति । किमिदमाश्चर्यम् । गोवर्धनो गिरिवरो धृतः कृष्णेन । दयासागरः श्रीनिवासो

-गिरिशेश्वरेण ध्रियते । अनवधेश्चायं सागरः सर्वविधपरिच्छेदराहितः । स्वयं व्यक्तोऽयं दयासागरः ॥

**कमप्यनवधिं वन्दे** । कमपीतीदमित्थंत्वेनापरिच्छेद्यत्वं द्योत्यते । तच्चानवधित्वेन । सावधिश्चेत्कथंचिन्निर्देष्टुं शक्येत ॥

**करुणावरुणालयम्** । भगवानपि दयानन्यः । अनन्यो दयया सः । दिव्यक्षेत्रस्थस्य वर्णने आलयशब्दप्रयोगश्चतुरः । वरुणालयस्य प्रपन्ने भगवत्यपि निष्करुणत्वं प्रसिद्धम् । तच्च वर्णयिष्यते 'अपां पत्युः शत्रून्....' इति । नायं तादृशः समुद्रः । किं तु करुणासमुद्रः ॥

**वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम्** । कृपासमुद्रोऽयमस्माननिच्छ्यन्नस्मत्समीपमागतः । उप समीपे । नास्माभिस्तदुपगमनं क्रियते । स्वयं प्रभूता दया । तत्सागरो भगवानपि स्वयंव्यक्तः । 'विवृणुते तनूं स्वाम् —' इति स्वयमेव तद्व्यक्तिः । तटस्थानां व्यक्तिमुपागच्छति । यदि ज्ञातत्वाभिमानी भवेदविज्ञात एव स्यात् । 'अविज्ञातो भगवानस्माभिः । तटस्था एव वयं तदनुभवे—' इति ये स्वेषां तटस्थत्वमेव मन्वते तेभ्यो व्यक्तिमुपागच्छति । 'अविज्ञातं विजानतां विज्ञातमविजानताम्—' 'प्राचेतसप्रभृतयोऽपि परं तटस्थाः—।' प्राचेतसवत्तटस्थात्तदापरोक्ष्यभागिनः ॥९॥

**अकिंचननिधिं सूतिमपवर्गत्रिवर्गयोः ।**
**अञ्जनाद्रीश्वरदयामभिष्टौमि निरञ्जनाम् ॥ १० ॥**

दयामूर्तिभूता गुरवो नमस्कृताः । दया नमस्क्रियते दशकान्ते । उद्दिष्टस्य दयास्तोत्रस्य प्रतिज्ञानं च क्रियते । दयाया अवतारमूर्तयो निरूपिता नवभिः श्लोकैरस्मिन्दशके । मूर्तिमती दया च दशमे श्लोके निरूप्यते । अथ वा स्वावतारेषु दयाप्यन्यतमा । स्वपरनिर्वाहिका दयेति वक्ष्यते । नवमदशके दयाप्रयुक्ता भगवदवतारा वर्ण्यन्ते । प्रथमदशकं च दयावताराणां प्रतिपादकम् । अर्चामूर्तित्वेनावतीर्णस्य श्रीनिवासस्य दयापि दिव्यस्थानादवतीर्णैव । अतस्तस्या अप्यवतारत्वेन गणनमिव ॥

**अकिञ्चननिधिम्** । दयायाः स्वयं पुरुषार्थत्वेन प्रदर्शनं निधित्वरूपणेन । निधिश्च महता प्रयत्नेन बहुवित्तव्ययेन सुदूरं वसुन्धरां खानयित्वा लभ्येत । अकिञ्चनत्वाध्यवसायमात्रेण सुलभो निधिरयम् । समन्वयाधिकरणसमन्वितिर्दयायाः । हिरण्यनिधित्वं भगवतो दयाद्वारा । दयाद्वारा निधिर्भवति स दयानिधिः ।

**सूतिमपवर्गत्रिवर्गयोः** । न केवलं स्वयं पुरुषार्थभूता । सर्वे पुरुषार्था अस्या एवोत्पद्यन्ते । दयादयां विना न कस्यापि पुरुषार्थस्य लाभः । अपवर्गदान एव दयायाः स्वभावत इच्छा । प्राणिनिर्बन्धेन तत्प्रीत्यर्थं तत्कांक्षितं त्रिवर्गफलं ददाति । एतद्व्यज्येत अपवर्गस्य प्रथमपठनेन । 'एकभक्तिषु हि भगवतः स्वत एव प्रावण्यम्, आर्तार्थार्थिजिज्ञासुषु औदार्यबलात्करणेन', इति श्रीभट्टपादाः । त्रिवर्गस्यापवर्गानुषङ्गिकतया दानेन वा तस्य चरमग्रहणम् ।

**अञ्जनाद्रीश्वरदयाम्** । करुणावरुणालयः सः । श्रीनिवासदयेयम् । परस्परं निरूप्यनिरूपकभावः ।

अग्रेभावी तदनु नयने रञ्जयन्नञ्जनाद्रिः

इति हंससन्देशोक्तरीत्या भक्तदृष्टिचित्तरञ्जकोऽयं गिरिः ।

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥

इत्युक्तं श्रीपाणिनिविषये । दिव्यचक्षुरुन्मीलितं भवत्यनेनाञ्जनगिरिणा ।

सिद्धाञ्जनेन भवतैव विभूषिताक्षाः ।
पश्यन्त्युपर्युपरि सञ्चरतामदृश्यं
मायानिगूढमनपायमहानिधिं त्वाम् ॥

इति दिव्यचक्षुरुन्मीलकत्वं भगवद्विग्रहरूपसिद्धाञ्जनस्य । अत्र भगवन्निवासभूताञ्जनगिरेरेवाञ्जनमयत्वम् । हिरण्यनिधिं भगवन्तं व्यनक्त्ययमञ्जनगिरिः । पर्वतो निधिमान् । नीलगिरिरयमस्माकम् । अत्र ग्रीष्मे सुशीत

इव महाहृदोऽस्ति । अञ्जनाद्रिणैव प्रभूतदया निरूप्यते ।

**अभिष्टौमि** । अस्मिन् श्लोके दया साक्षात् प्रथमं पृथगुपदिश्यते । उद्देशक्षण एव स्तोत्रघटकानि पद्यानि झञ्झामारुतधूतचूतनयतः साम्पातिकेन क्रमेण खले कपोतवत् बुद्धौ युगपत सन्निदधते । तदनुभूयते आचार्यैः अभितः समन्ततः स्तौमीति । 'तव प्रसादस्य पुरस्तु सम्पदः' । 'अगाधत्वेनान्तः प्रविश्य स्तोतुं सामर्थ्याभावादभितः स्तौमि । यद्वा तत्सम्बन्धी श्रीवेङ्कटेशोऽपि स्तुतो भवति' इति श्रीमद्रामानुजाचार्याः ।

**निरञ्जनाम्** । अञ्जनाद्रिनिवासिनो दया । अस्यामञ्जनलेशोऽपि न विद्यते । किमिदमाश्चर्यम् । निरञ्जनां निर्दोषां । निरञ्जनः श्रीनिवासः । तद्दयितया निरञ्जनया भाव्यम् । क्रमेण फलत्वम्, फलसाधनत्वं, स्वरूपं, दोषाबाध्यत्वञ्चोक्तम् । एवं च चतुरध्यायीप्रतिपाद्यत्वं दयायाः । दयावर्णने प्रथमं फलकीर्तनमेव स्वादु ॥

**अनुचरशक्त्यादिगुणामग्रेसरबोधविरचितालोकाम् ।**
**स्वाधीनवृषगिरीशां स्वयं प्रभूतां प्रमाणयामि दयाम् ॥ ११ ॥**

निधित्वकथनेन ब्रह्मवत् स्वयंपुरुषार्थत्वमुक्तम् । सूतिमपवर्गत्रिवर्गयोरिति ब्रह्मलक्षणभूतसर्वफलप्रदत्वमुक्तम् । निरञ्जनत्वञ्चोक्तं दयायाः । दयास्तुत्युपक्रमश्च प्रतिज्ञातः । अत्रेमे आक्षेपा भवन्ति । कथमस्याः फलप्रदत्वं सति भगवति सर्वफलप्रसवितरि । कथं गुणिनं विहाय गुणभूताया अस्याः स्तुत्यत्वम् । गुणिनमपहाय गुणमात्रस्तुतावपि कथं गुणान्तराण्यपहायास्याः स्तुत्यत्वम् । एते आक्षेपाः परिह्रियन्ते ।

विश्वोपकारमिति नाम सदा दुहानामद्यापि देवि भवतीमवधीरयन्तम् ।

इति दशमदशकारम्भे वक्ष्यते । तत्पूर्वं दयायाः सर्वोपकारदोग्धृता प्रतिपादितेति स्पष्टं सूच्यते तस्मिन् श्लोके । विश्वस्य सृष्टिपालनादिरूपा विश्वोपकारा अपि दयया निर्वर्त्यन्त इत्यस्मिन् दशके निरूप्यते । भगवदीयत्वेन प्रसिद्धा विश्वोपकारा दयामूलाः । जन्मादिलक्षणं ब्रह्मणि द-

यान्वयेनैवान्वियात् । भगवान् दयापराधीनस्तद्वशतया सृष्ट्यादिकं करोति । गुणान्तराणां दयान्वयं विना गुणत्वमेव न; प्रत्युत दोषत्वं स्यात् । तेषां न मुख्यतया निरुपाधिकतया गुणत्वम् ; किन्तु दयासम्बन्धरूपोपाधिद्वारैव; यथा ब्रह्मणो जन्मादिलक्षणमुच्यते ; तथा जन्मादिना दयापि लक्ष्यते । अस्मिन् दशके आर्यावृत्तम् । आर्याया दयाया आर्यस्वभाववर्णनमार्यावृत्तेन । आर्याः शरणागतरक्षणधर्मनिष्ठाः ॥

**अनुचरशक्त्यादिगुणाम्** । अत्र महिषीसमाधिः । शक्त्यादयोऽनुचराः । न गुणवन्तोऽनुचराः, यथाऽन्येषाम् । गुणा एवास्या अनुचराः । औचित्यात्स्त्रीरूपायाः शक्तेः प्रथमनिर्देशः । शक्त्यादयो दयामनुचरन्ति । महिष्यपि दया न शिबिकामारुह्य गच्छति ; दयात्वात् । पद्भ्यां गच्छति रक्ष्यप्रजा अन्विष्यन्ती । न प्रजान्वेषिणी माता शिबिकामारुह्य गच्छेत् । न परिजनान् प्रेषयति । प्रथमं सैव त्वरितं गच्छति । गच्छन्तीं तामनुगच्छति परिजनः । बोधो गच्छति दीपहस्त आलोकशब्दं कुर्वन् । शक्तिबलैश्वर्यवीर्यतेजोगुणा दयानुचरीभूय तदभिमतं निर्वहन्ति । 'कृपणभरभृत्किंकुर्वाणप्रभूतगुणान्तरा—' इत्यष्टमदशकारम्भे गुणान्तराणां किङ्करत्ववर्णनं दयाप्रभावस्य विस्तरेण निरूपणानन्तरम् । अत्रारम्भेऽनुचरत्वमात्रकथनम् । गुणसार्वभौमीत्वोपपादनमुखेन स्तव उपक्रम्यते ॥

**अग्रेसरबोधविरचितालोकाम्** । ज्ञानस्याग्रेसरत्वम् । नानुचरत्वम् ; किन्तु पुरःसरत्वम् । ज्ञानावस्थाविशेषत्वाद्दयायाः । आलोकशब्दः क्रियेत पुरोगामिना 'इत इतो देवी, आलोकयतु भवती' इति । आलोको ज्ञाननिर्वर्त्यो दयनीयप्रकाशः । ज्ञानस्य पुरोगामित्वेऽपि दयापरिजनत्वमेव दीपधारकवत् ॥

**स्वाधीनवृषगिरीशाम्** । एतत्पराधीन ईश्वरः । एतदायत्त एव सर्वनिर्वाहः । स्वतन्त्रोऽपि दयापरतन्त्रो भवति । इयं वल्लभतमा महिषी । वृषगिरिसार्वभौमदयितेयं गुणसार्वभौमी ॥

**स्वयंप्रभूतां दयां प्रमाणयामि** । स्वतःसिद्धा स्वाभाविकी दया। 'स्वाभाविकी ज्ञानबलक्रिया च ।' स्वाभाविकज्ञानविशेषभूतेयम् । दयैका प्रमाणम् । तामेव प्रमाणीकरोमि । नान्या गतिः । सैव गतिः । इयं स्वयं प्रभूता निरवधिका । न कृत्रिमा । प्रकाश्यते, न जन्यत इयम् । नित्यैवेयं भगवतः । स्वयं प्रभूतेति स्वयं प्रभ्वी भूता । प्रभूतां निरतिशयां त्वां स्तोत्रेण प्रमातुं प्रयतिष्ये । स्वयं प्रभ्वी सा स्वतन्त्रेति प्रमाणैर्निरूपयामि । प्रमाणं करोमि, शरणं करोमि । जानाति, इच्छति, यतत इति क्रमोऽनुस्त्रियते । ज्ञानं पुरोगामि । परदुःखनिराकरणेच्छा ज्ञानानुयायिनी गच्छति। दयेच्छा पूर्यते शक्त्यादिभिः ॥ ११ ॥

**अपि निखिललोकसुचरितमुष्टिन्धयदुरितमूर्छनाजुष्टम् ।**
**सञ्जीवयति दये मामञ्जनगिरिनाथरञ्जनी भवती ॥ १२ ॥**

दयाया उत्तममहिषीत्वं वर्णितम् । ईश्वरस्य तत्पराधीनत्वं चोक्तम् । तावताऽस्माकं पापिष्ठानां किमायातम् । गुणसार्वभौमी दया । यदि गुणलेशोऽपि स्यादस्माकम्, सा अस्मासु सिद्धेत् । यदि प्राणलेशः स्याज्जीवयेन्मुमूर्षुं कुशलो भिषक्पीयूषहस्तः । प्रभूतक्रूरविषमूर्छया व्यपगतप्राणोऽनाद्यनन्तापराधी कथं सञ्जीव्येत । दयाया व्यपगतप्राणात्मसञ्जीवित्वमुच्यते द्वितीये श्लोके, यथा श्रीभाष्यद्वितीयश्लोके । ओषधिपर्वतशिखरे सम्भवन्त्यः 'मृतसञ्जीवनी, विशल्यकरणी ; सावर्ण्यकरणी, सन्धानकरणी' इत्योषधयो दश दिशो दीपयन्त्यो दीप्ताः सन्तीति शृणुमः श्रीमद्रामायणे । दया च तादृश्योषधिः । अस्या नामाञ्जनगिरिनाथरञ्जनीति । उक्तसर्वौषधिकार्यमियं कुरुते । 'तस्मात्सर्वौषधमुच्यते' । मृतसञ्जीवनीयम् । अस्याः प्रभावेण गिरिनाथविग्रहोऽपि मृतसञ्जीवनो भवति । 'मृतसञ्जीवनमञ्जनाचलेन्दोः' इति वक्ष्यते ॥

**निखिललोकसुचरितमुष्टिन्धयदुरितमूर्छनाजुष्टम्** । प्रथमपादे श्रीभाष्यमङ्गलश्लोकप्रत्यभिज्ञापनम् ; श्रीनिवासविषयत्वात्स्तोत्रस्य । 'अ-

पि' इत्यकारोपक्रमस्य कृतत्वान्निखिलेत्युक्तिः । अखिलभुवनभङ्गस्तत्र । अखिललोकदुश्चरितभङ्गोऽत्र निर्दिश्यते । कः कर्ताऽस्य महतो भङ्गस्य । अहमेव,मत्पापं वा । मत्कर्मैतत् । को भवान् ? चक्रवर्ती खल्वहम् । किं त्वच्चक्रं अपराधचक्रम् । निरवधिका मत्पापशक्तिश्चुलकीकुर्यात्त्रिजगत्पुण्यसमुद्रम् । 'अधर्मो धर्मनाशनः' । पापिसामीप्यादपि समीपस्थानां पुण्यनाशः । पापं विषमच्छेद्यमदाह्यमात्मानमपि मूर्छयति, दहति । दुरितविषमूर्छया जुष्टोऽहम् । 'श्रिया जुष्टं नरम्' इति वदन्ति ॥

**सञ्जीवयति** । 'औषधं जगतः सेतुः —' इति प्रख्यातस्य भवौषधस्य दया सञ्जीवनौषधिः । 'तस्मिञ्जीवति वीरे तु हतमप्यहतं बलम् । हनूमत्युज्झितप्राणे जीवन्तोऽपि वयं हताः ॥' इति जाम्बवता श्लाघितो हनूमान्सर्वौषधियुक्तं प्रदीप्तमतुलप्रभमोषधिपर्वतं गत्वा सञ्जीवन्याद्योषधीर्दृष्ट्वा ताः संगृह्य ताभिर्मृतप्रायान्समाश्वासयामास । हनूमत्समा यतिपतियामुनप्रभृतयः पर्वतशिखरवर्तिसर्वौषधस्य भगवतः सारगुणभूतां दयां दृष्ट्वाऽस्मांस्तां प्रापयन्ति । सञ्जीवयतीति पर्वतशिखरसम्भवत्सञ्जीवनौषधित्वव्यञ्जनमिव 'व्यपगतप्राणात्मसञ्जीविनीम्– इति श्रीभाष्यश्लोकप्रत्यभिज्ञापनं स्पष्टम् । पाराशर्यवचःसुधायाः सञ्जीवनीत्वं च कमलाकान्तकारुण्यगङ्गाप्लावनद्वारा । भस्मीभूतानां सगरपुत्राणां सञ्जीवनं भगीरथानीतया गङ्गया ॥

**दये माम्** । अत्र प्रथमं दया सम्बोध्यते प्राणभिक्षाप्रार्थनाय । तां सम्बोध्य सञ्जीवनप्रार्थनोत्तरक्षणे स्वसत्तालाभः ॥

**अञ्जनगिरिनाथरञ्जनी भवती** । अञ्जनस्य रञ्जकत्वं स्वभावः । गिरिप्रमाणमञ्जनमस्ति नाथस्य । तस्य नाथोऽपि सन् तावताप्यञ्जनेनाकृतरञ्जनोऽनया रञ्जितो भवति । अञ्जनगिरिनाथरञ्जनीति सञ्जीवनौषधेः संज्ञेव ॥

**भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे ।**
**अप्रतिघमज्जनानां हस्तालम्बो मदागसां मृग्यः ॥ १३ ॥**

'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि—' इतिवत् पापनिर्हरणं कांक्ष्येत । तच्च दययैकया साध्येतेति तां शरणीकुर्मः । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति भगवान् । 'न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा' इति करुणारूपिणी माता । अतोऽत्र दयया कर्मणो भस्मीकरणं नोच्यत इति रसिकैर्भाव्यम् । दुरितं नाम किम् ? कुत्र तिष्ठति ? कमाश्रयति ? ईश्वरप्रीतिकोपौ पुण्यापुण्ये इति खलु वेदान्तनिर्णयः । अपराधजनितं भगवदाशये औष्ण्यम् । तदाशय एवाश्रयोऽस्मद्दुष्कर्मजन्याशुभादृष्टस्य निग्रहसङ्कल्पत्वेन परिणतस्य । आश्रयभूतसर्वोत्तुङ्गवृषशिखरिनाथस्य दयाप्रवाहेन निमज्जने आश्रयमज्जनात्स्वयमपि मज्जयुः । मङ्क्त्वा च हस्तालम्बं न प्राप्नुयुः । भस्मसात्करणरूपक्रौर्यं विनैवं सम्पाद्यते । दयया पापप्रविलयः । अकूपारैरेकोदकवैतण्डिकजवैर्दयाम्भोभिराश्रयभूतो वृषशिखरिनाथो मज्जयिष्यते । तद्वदयाश्रितं दुरितं तन्मज्जने मज्जेत् ॥

**भगवति दये भवत्या** । भगवच्छब्दस्योपमानत्वं निगद्यते ब्रह्मशब्दस्य श्रीनिवासे मुख्यतानिरूपणे । 'अन्यत्र तद्गुणलेशादौपचारिको भगवच्छब्दवत्' इति भावितम् । ब्रह्मलक्षणानि तदसाधारणधर्मा दयामूलाः । आत्मदयौपाधिकं ब्रह्मणो ब्रह्मत्वम्, भगवतो भगवत्त्वम् । तथैव निरूपितं; निरूपयिष्यते च । अतो भगवतीति दयासम्बोध्यते ॥

**भवत्या तुङ्गे वृषगिरिनाथे समाप्लुते** । 'दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे—' इति पदानां व्याख्यानावसरे 'अत्र दयावात्सल्यसिन्धुत्वरूपणेनातितुङ्गानामपि स्वापराधानां तत्र निमज्जनं सूच्यते' इति भावितमाचार्यैः । स एव भावो व्यज्यतेऽत्र तुङ्गशब्देन । 'परमतुङ्गमात्मानम्—' इति भगवन्तं वर्णयन्ति भट्टपादाः । दयार्णवे गिरिशिखरनिवासी निमज्ज्य विलीनस्वातन्त्र्यो भवति । मज्जनेन तदाशयोष्णिमनिर्वापणम् । न केवलं मद्विधानामाप्लावनं दयया ; भगवतोऽप्याप्लावनम् । पर्वतशिखरस्थस्याप्लावने प्रवाहो नियतं दुर्वारो भवेत् । एतदर्थमपि श्रीनिवासदयावरणं

स्तवनाय । नाप्लावनमात्रम् ; किन्तु समाप्लावनम् । समिति निश्शेषोक्तिः ॥

**अप्रतिघमज्जनानाम्**। दुर्निवारमज्जनानाम् । आश्रयस्यैव मग्न-त्वे कथमाश्रितानाममज्जनम् । अथ वा प्रतिघशब्दः कोपवाची । 'जह्या-द्वृषाचलपतिः प्रतिघेऽपि न त्वाम्' इत्यत्रैव तदर्थे प्रयोगः । यथा प्रतिघः कोपो निःशेषं निवर्तेत तथा निमज्जन्त्यागांसि अप्रतिघं कोपशेषं विना । क्रोधवासनाशेषं विना ॥

**हस्तालम्बः**। 'हस्तालम्बो भवत्येको भक्तिक्रीतो जनार्दनः' इति प्रसिद्धो हस्तालम्बोऽपि समाप्लुतः । कोऽन्यो भवेदालम्बः ?

**मदागसाम्**। 'अपि निखिललोकसुचरितमुष्टिंधयदुरितमूर्छनाजु-ष्टम्—' इत्यादिना वर्णितस्यापराधचक्रवर्तिनो मम पापानाम् ॥

**मृग्यः**। मार्गणश्रम एव केवलम् । न प्राप्तिसंभवः । 'मृग्यः' इति मार्गणेन दुर्लभ्रूपाश्रयो लप्स्यत इति व्यज्यते । 'द्विषन्तः पापकृत्याम्' । अतात्तृत्वरूपप्रलयकर्तृत्वं बोध्यते । पापप्रलयकर्तृत्वं पापात्तृत्वम् दया-लक्षणम् । उपपादयिष्यते चेदं स्पष्टम् 'आलिह्य तान्निरवशेषमलब्ध-तृप्तिः' 'अपराधगणैरपूर्णकुक्षिः' इति । 'अन्यद्व्यतिक्रमणजातमनन्तमत्त्री स्थाने दया भवतु ते मयि सार्वभौमी—' इति तदेवोच्यते शरणागतिदीपि-कायाम् । तत्र 'अत्तो' इति पाठं रोचयामहे ॥ १३ ॥

**कृपणजनकल्पलतिकां कृतापराधस्य निष्क्रियामाद्याम् ।**
**वृषगिरिनाथ दये त्वां विदन्ति संसारतारिणीं विबुधाः ॥ १४ ॥**

दया नाम मार्दवगुणः । तस्याः कोमलत्वादिकं वर्णनीयम् । दि-व्यमहिषी सोत्तमस्त्रीत्वेन वर्णनीया । पूर्वमनिष्टनिवृत्तिरुक्ता । इष्टप्रापणं वक्तव्यम् । पापं मग्नं भवतीत्युक्तम् । प्रळयोदधौ मग्नमपि पापं पुनरु-त्तिष्ठेत् । 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' इति सूत्रकृता प्रळयमग्नस्य कर्मणः पुनरुत्थानमुक्तम् । निष्कृत्या खलु पा-पमपुनरङ्कुरं क्षीयेत । दयाया निष्कृतित्वमुपपादनीयम् । मग्ना वयमगा-

धे दुरत्यये भवार्णवे । मग्नानामस्माकं कथमेकोदकदयाप्रवाहमज्जनेन संसारार्णवतरणलाभः? मग्नस्यागाधतरोदकमज्जनेन कथं रक्षणम्, तारणं वा स्यात् । मग्नतरत्वमेव सिद्ध्येत् । एवमाक्षिप्ते—अयं श्लोकोऽवतरति ॥

**कृपणजनकल्पलतिकाम्** । कल्पलतिकेयं महिषी । न लता; किं तु कोमलकोमला लतिका । नाक्यपुराणामभीष्टप्रदा कल्पलता । कृपणानामकिञ्चनानां साधारणजनानां वाञ्छितसर्वप्रदा । 'जन–' इति सर्वाविकारत्वद्योतनम् । अस्यैव विवरणम् 'अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीम्–' इति प्रपत्तिपरषष्ठदशकारम्भे । जनशब्दस्थाने तत्र जन्तुशब्दः । 'अर्थिकल्पकम्' इति पदस्य 'यद्वा अर्थिनः कल्पद्रुमभूता यस्य सोऽर्थिकल्पकः । तदाह उदाराः सर्व एवैते—'इत्यर्थान्तरवर्णनं स्तोत्रभाष्ये । तद्रीत्या कृपणा अकिञ्चनाः कल्पलतिकाः क्रियन्ते दयया । तदेवौदार्यम् । अर्थिनामुदारीभवनं दातुरौदार्यप्रकाशकम् । 'अपुनः प्रार्थनीयस्य प्रार्थिताधिकदायिनः । अर्थिनः प्रथमे तस्य चरमान् पर्यपूरयन् ॥'इत्येवमौदार्यवर्णनं यादवाभ्युदये । वृषशिखरिविटङ्कस्थायी कल्पवृक्षः श्रीनिवासः । तं कल्पशाखिनमाश्रिता वल्ली दया ॥

**कृतापराधस्य निष्क्रियामाद्याम्** । दयैव निष्कृतिः पापस्य । निष्कृत्या पापक्षयः । निष्क्रिया निष्कृतिरिति नाममात्रं प्रायश्चित्तरूपक्लेशबहुलक्रियायाः । भूयसी क्रिया सा । 'यदि क्वचन निष्कृतिर्भवति साऽपि दोषाविला' इत्याचार्याः । कृतस्यापराधकर्मणो निष्कर्मत्वापादनात्तस्या निष्क्रियेति संज्ञा । 'धर्मेण पापमपनुदति ।' धर्मश्च विहितक्रिया । चोदनालक्षणोऽर्थो धर्मः । विहितप्रायश्चित्तान्तरेषु निष्कृतिनिष्क्रियासंज्ञे विरुद्धे स्याताम् । यदा दया निष्कृतिर्भवति तदा न साऽनुपपत्तिः । दया न क्रिया ; ज्ञानत्वात् । साऽन्वर्था निष्कृतिः । पूर्वमेव सिद्धा सा । स्वतः सिद्धत्वात् । न कृतिसाध्या । इतः पूर्वं सिद्धैव निरुद्धाभूत् । आविर्भावश्च कार्पण्यनिवेदनेन । कथं तस्याः प्रायश्चित्तत्वम् ? तत्कार्य-

कारित्वात् । प्रायश्चित्तैः किं क्रियते ? । भगवत्कोपशान्तिर्भगवत्प्रसादः । निग्रहसङ्कल्पशान्तिरूपप्रसाद एव दया । तयाऽऽविर्भवनीयम् । दया दयनीयदुःखनिराकरणेच्छा । दयाविर्भावे किमन्यत्साध्यम् ? दयारूपप्रसादः खलु साध्यः । साधनं साध्यं च दया । सिद्धं च साधनम् । क्रियाभिन्नत्वे सति क्रियान्तरनिष्क्रियात्वापादनं दयाया एव सम्भवति । उभयविधनिष्क्रियात्वसम्भवेनेयमेव प्रधानभूता मुख्या निष्क्रिया । आद्यां मुख्याम् । 'कृतापराधस्य' इति 'कृतापरातस्य हि ते' इति हनूमद्वचनं स्मारितमिति श्रीमद्रामानुजाचार्याः ॥

**वृषगिरिनाथ दये त्वां विदन्ति संसारतारिणीं विबुधाः ।**
वृषो धर्मः । धर्मोऽधर्मनाशनः । पापनाशनो वेङ्कटगिरिर्वृषगिरिः । पापनाशनप्रस्तावे वृषगिरिकीर्तनमत्यन्तस्वरसम् । संसारार्णवनारकत्वं सुखमये ऽभये दयार्णवेऽस्मान्निमज्ज्य । विबुधा यतिपतियामुनप्रभृतयः । १४ ॥

**वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः ।**
**दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ॥ १५ ॥**

सन्त्यनन्ताः कल्याणगुणाः । सन्ति षड्गुणा यैर्भगवान् भगवान् भवति । कथम् 'दयामभिष्टौमि' इति दयास्तव उपक्रान्तः ? अत्रोच्यते ---गुणैर्भगवतो भगवत्त्वम् ; न दोषैः । षण्णां गुणानां गुणत्वमेव न सिद्ध्येद्यदि ते दयया विनाभूता भवेयुः । तेषां गुणत्वाभावे, दोषत्वे च कथं तैर्युक्तो भगवान्निर्दोषगुणाकर उभयलिङ्ग इत्युच्येत ? उभयलिङ्गाधिकरणं शारीरके प्रधानतममित्यधिकरणचिन्तामणिकृतः । तन्न सिद्ध्येद्दयां विना । गुणान्तराणां गुणत्वं दयासहकृतत्वेन । व्यतिरेकमुखेनेदं निरूप्यतेऽत्र । अन्वयप्रदर्शनमार्थम् ॥

**वृषगिरिगृहमेधिगुणाः** । 'सततलोकीगृहस्थः—'इति मीमांसापादुकामङ्गळश्लोके । 'चतुरुदधिकेदारकुटुम्बी—' इति श्रीहर्षवर्धनो वर्ण्यते भट्टबाणेन । वसुधाकुटुम्बयं कृषीवलः । गृहमेध्येवायं श्रीनिवासः॥

**बोधबलैश्वर्यवीर्यशक्तिमुखाः** । अत्र बोधस्यापि पठनम् । सार्वज्ञ्यमपि दयां विना बाधकं भवेत् । अविज्ञातृत्वमपेक्ष्येतापराधादर्शनाय । दयासहकृताश्चैते परमकल्याणाः स्युः । तां विना ते हिंसका भवेयुः । अस्माकं हिंसको बाधको दोष इत्यपराधिनामस्माकमभीष्टं लक्षणम् । दयान्वयोपाधिकं गुणान्तराणामेतादृशगुणत्वम् । मुख्यं निरुपाधिकं गुणत्वं तु दयाया एव । मुख्यामुख्ययोर्मध्ये मुख्ये कार्यसम्प्रत्ययो न्याय्यः । मुख्यं गुणं दयामेवाभिष्टुवीमः । 'यदि नाम दये त्वया विना भूताः' इति तेषां वस्तुतो न कदाऽपि दयान्वयविरह इति द्योत्यते नामसहकृतयद्यालिङ्गितवचनेन । दयाराहित्यं कल्पयित्वा वर्णयामः । 'सन्दर्शितस्वपरनिर्वहणा सहेथाः' इति दया स्वपरनिर्वाहिका । सत्यप्यैश्वर्यादिभूमनि महिषीं दयां विना कथं गृहमेधिनः सुखं भवेत् ? 'गृहिणी गृहमुच्यते-' सर्वेऽनुचरास्तदधीनाः ॥ १५ ॥

**आसृष्टिसन्ततानामपराधानां निरोधिनीं जगतः ।**
**पद्मासहायकरुणे प्रतिसञ्चरकेलिमाचरसि ॥ १६ ॥**

स्वाधीनवृषगिरीशामित्युक्तम् । शक्त्यादिगुणा अस्या अनुचरा इति चोक्तम् । यदि दयासाम्राज्यं निरंकुशम् ; कथं क्रोधैकमूलप्रळयवैशससम्भवः । यदि दया ब्रह्मणोऽपि परा तस्या जन्मादिकारणत्वं वर्णनीयम् । 'कारणं तु ध्येयम् ।' दया ध्यायतेऽत्र । तस्याः कारणत्वं निरूपणीयम् । प्रळयपूर्विका सृष्टिर्वर्ण्यते श्रुतिषु । श्रौतः क्रमश्चानुरुद्धो भवति ॥

**आसृष्टिसन्ततानाम्** । प्रळयकरणे दयाकाष्ठेति समाधिरुच्यते । प्रळयनिर्वर्तिका दया । काष्ठां गते पापे प्रळयो भावी । माता शिशवोऽप्रतिविधेयदौष्ट्यप्रकटने स्वापेन जोष्यन्ते । करुणामय्या अनया मात्राऽपराधपरम्परायां निवर्तयितुमशक्याः पापिष्ठाः प्रजा दीर्घस्वापवशीक्रियन्ते प्रळयेन दीर्घनिद्रया दौष्ट्यं विस्मरेयुरिति । 'अनवरतसुखदुःखोपभोगायासपरिश्रान्तानां विश्रमार्थमश्रान्तापथप्रवृत्तिवासनाविच्छेदार्थं चोपसंहारः ।

अतो न संहारे नैर्घृण्यदोषः ।' इति तात्पर्यचन्द्रिकोक्तमिह भाव्यम् ॥

**अपराधानां निरोधिनीम्** । जगदपराधनिरोधः प्रळयः । अपराधरुचिस्वभावस्य प्रळयः । निरोधशब्दः प्रळयवाचकः । निरोध इति दुष्टस्वभावनिरोध एव । तथा च निरोधस्य करुणारूपत्वमुपपादितं भवति । निरोधः सर्वचेतोवृत्तिनिरोधः । प्रळये चैतन्यगुणस्यात्यन्तनिरोधः ॥

**जगतः** । जगत्कृत्स्नमपराध्यभवदिति व्यज्यते । नैकोप्यनपराधी । अतः कृत्स्नजगन्निरोधः । अपराधिन एवावशिष्टाः । अन्ये मोचिताः ॥

**पद्मासहायकरुणे प्रतिसञ्चरकेलिमाचरसि** । 'संप्राप्ते प्रतिसञ्चरे--' इति प्रतिसञ्चरः प्रळयः । नर्तने पुरःसञ्चरः, प्रतिसञ्चरश्च ललितं क्रियेत नर्तक्या । प्रतिसञ्चररूपकेलिरियम् । प्रतिसञ्चरशब्देन नर्तनकेलिरप्युच्यत इति रसिकमनोरञ्जनम् । 'नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम्—' इति स्थितस्यापि कान्ततमत्वमनुभूयते रसिकैः । क्रीडा च श्रियः, श्रीनिवासस्य ; तद्दयायाश्च । तवोत्तमनर्तनकेल्याः सदृशावध्यक्षौ । करुणाप्रयुक्ता केलिः । 'आनीदवातं स्वधया तदेकम्—' इति पद्मासहायत्वं तदाऽपि । अस्ति दयाऽपि तदा । गुणत्वान्न तस्याः पृथक्कीर्तनं श्रुत्या । 'रमया सह मोदते ।' पद्मायाः करुणा सहायभूतेत्यपि गम्यते । एवं भङ्गकारणत्वं ; तदुपपत्तिश्च प्रदर्शिते ॥

**अचिदविशिष्टान् प्रळये जन्तूनवलोक्य जातनिर्वेदा ।**
**करणकलेबरयोगं वितरसि वृषशैलनाथ करुणे त्वम् ॥ १७ ॥**

प्रळयकारणत्वमुपपादितं दयायाः । सृष्टिकारणत्वमुच्यते ।

'अचिदविशेषितान्प्रळयसीमनि संसरतः
करणकलेबरैर्घटयितुं दयमानमनाः ।
वरद निजेच्छयैव परवानकरोः प्रकृतिं
महदभिमानभूतकरणावलिकोरकिणीम् ॥'

इति भट्टपादाः । तस्यैवार्थावृत्ते संक्षेपोऽयम् । प्रायेण त एव शब्दाः । 'पुरा सर्गकाले स भगवान्प्रजापतिरनादिकालप्रवृत्ताचित्संसर्गविवशा उपसंहृतनामरूपविभागाः स्वस्मिन् प्रलीनाः सकलपुरुषार्थानर्हाश्चेतनेतरकल्पाः प्रजाः समीक्ष्य परमकारुणिकस्तदुज्जिजीवयिषया स्वाराधनभूतयज्ञनिर्वृत्तये यज्ञैः सह ताः सृष्ट्वैवमुवाच' इति गीताभाष्ये । अप्ययपूर्विका सृष्टिरुपदिश्यते उपनिषत्सु । तदनुसारेणाप्यत्र प्रळयस्य पूर्वनिर्देशः ॥

**अचिदविशिष्टान्** । 'चेतनेतरकल्पान्—' इति गीताभाष्ये । 'तेन त्रिवर्गेऽप्यनर्हाः, किं पुनरपवर्गे । स्वप्रकाशत्वेऽप्यत्यन्तज्ञानसङ्कोचात्तत्कल्पत्वम् ; न तु ज्ञानविनाशात्' इति तत्पदव्याख्यानं तात्पर्यचन्द्रिकायाम् । अचितोऽविभागमापन्नान् । ब्रह्मणोऽविभागः अचितो विभागश्चेष्टव्यः । इमे त्वचिदविभागमापन्ना इति शोच्यत्वं व्यज्यते ॥

**प्रळये जन्तूनवलोक्य** । समीक्ष्येति भाष्यपदम् । 'समीक्ष्य सम्यगवलोक्य—' इति चन्द्रिका । जन्तून्हिरण्यगर्भादीन् । सृष्ट्यौन्मुख्यकाले जन्तूनिति पदप्रयोगः स्वरसः ॥

**जातनिर्वेदा** । त्वन्निर्वेदजन्मानु जगज्जन्म । त्वदाविर्भावे जगदाविर्भावः । त्वन्निर्वेदो जातः । सद्यो जगज्जन्म । त्वन्निर्वेदजनिमनु जगज्जनिः ॥

**करणकलेबरयोगम्** । एतद्योगं विना न भक्तिप्रपत्तियोगसम्भवः । योगो भवेदित्याशया दययैतद्योगदानम् । 'ईश्वराय निवेदितुम्' खलु 'विचित्रा देहसम्पत्तिः' कार्यते दयया ॥

**वितरसि** । ददासि । संसारं तरितुं वितरसि ॥

**वृषशैलनाथकरुणे त्वम्** । त्वया जुष्टो नाथः स्रष्टेत्युक्ते त्वमेव स्रष्ट्री भवेः । सविशेषणे विधिर्विशेषणमुपसंक्रामति ॥ १७ ॥

**अनुगुणदशार्पितेन श्रीधरकरुणे समाहितस्नेहा ।**
**शमयसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ॥ १८ ॥**

भङ्गसृष्टी उक्ते । पालनमुच्यते । मुख्यं पालनं शास्त्रप्रदीपदानेन । इतरथाऽन्धं तम एव स्यात्प्रपञ्चः । वत्सलतमशास्त्रप्रदानं परमवत्सलाया दयाया अनुग्रहः। 'शास्त्रयोनित्वात्' इति सूत्रस्य 'शास्त्रकर्तृत्वात्' इति प्रथमवर्णकवर्णितोऽर्थः श्रीशङ्करभाष्ये । 'मानं प्रदीपमिव कारुणिको ददाति' इति श्रीरङ्गराजस्तवद्वितीयशतकप्रथमश्लोके । अज्ञानतमोनिरसनाय शास्त्रदानं प्रथमोपकारः ॥

**अनुगुणदशार्पितेन** । दीपस्य सगुणा दशापेक्ष्येत । दशायामप्येत दीपः । 'सुमतिभिरनुभाव्यः शोभनायां दशायाम्—' इति भाष्यदीपविषये सङ्कल्पसूर्योदये । अनुगुणदशा शोभना दशा । नवे वयस्येव शास्त्राभ्यासः कार्यः । श्रद्धादियुक्तसत्त्वोत्तरकाल इति वा ॥

**श्रीधरकरुणे** । श्रियं हृदयदेशे धरति । तस्य करुणा सहजा । विद्यामूर्तिः सा ॥

**समाहितस्नेहा** । दीपं स्नेहेन पूरयित्वा । स्नेहमयीभूय । 'कृपया निस्पृहो वदेत् ।' न वेतनार्थं पाठयिताचार्यः । नायं ज्ञानपण्यो वणिक् ॥

**शमयसि तमः प्रजानाम्** । प्रजेति वात्सल्यद्योतनम् । अज्ञानसंशयविपर्ययरूपतमः शमयसि । न पुत्रं पाठयितुं वेतनं गृह्णीत ॥

**शास्त्रमयेन स्थिरप्रदीपेन** । मयटा प्राचुर्यं विवक्ष्यते । तेन च शास्त्राविरोधितर्कस्याभ्युपगमः । शास्त्रस्यैव प्राधान्यम् ; प्राचुर्यं च । शास्त्राननुसारितर्कस्याप्रतिष्ठितत्वं द्योत्यते स्थिरशब्देन । 'तर्काप्रतिष्ठानात्' इति केवलतर्कस्याप्रतिष्ठितत्वरूपास्थैर्यम् । स्थिरत्वं प्रतिष्ठितत्वमविचाल्यत्वं तर्कवातैः ।

'मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥'

इति भारविश्लोकः,

'हर्तुं तमः सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति'

इति श्रीरङ्गराजस्तवश्लोकश्चात्र भाव्यौ । कारुणिक इति शास्त्रदीपदानस्य करुणाप्रयुक्तत्वमुक्तम् । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।' पूर्वश्लोकोक्तसृष्ट्यनन्तरं वेदप्रदानं न्याय्यम् । अत्र सूतिकागृहादौ शिश्वर्थं समीचीनगुणार्पितस्नेहपूर्णस्थिरप्रदीपनिवेशनमपि स्मार्यते । मातृस्थानीया दया ॥ १८ ॥

**रूढा वृषाचलपतेः पादे मुखकान्तिपत्रलच्छाया ।**
**करुणे सुखयसि विनतान्कटाक्षविटपैः करापचेयफलैः ॥ १९ ॥**

शास्त्रदीपेन तमोहरणे दयाविनतिः क्रियते । दीपे समेधिते जना नमस्कारं कुर्युः । विनतांश्च दया वृक्षीभूय फलैः सुखयति । दयावृक्षो वृषाचलपतेः पादे रूढमूला । भगवन्मुखकान्तयो हरितपर्णानि । भगवन्मुखनीलिमा प्रचुरा छाया । दयाकटाक्षा विटपाः । दयाप्रियसहचर्यः श्रीनिवासदृष्टयो वा शाखाः । विनताः सुखिताश्छायया । दयावृक्षस्य फलानि विनतानां हस्तापचेयानि भवन्ति । आश्चर्यमिदम् । उद्बाहुप्रांशुलभ्यं फलमिति प्रसिद्धम् । अत्र साष्टाङ्गप्रणतेः फलं लभ्यते । प्रांशुभिर्न लभ्यते । कथमस्य संभवः ? फलं स्वयं हस्तसमीपमागच्छत्यपचयाय । 'उन्नतानामवनतिर्नतानां यत्र चोन्नतिः ।' 'छन्दांसि यस्य पर्णानि' 'नयप्रवालं विनयोपशाखम्' 'एकायनोऽसौ द्विफलस्त्रिमूलः' इत्यादिषु वृक्षरूपकप्रदर्शनं दृश्यते । 'जनिरथपरिवृत्तिश्रान्तविश्रान्तिशाखी' इति दयापरिवाहभूतयतिपतिर्वर्ण्यते ॥

**रूढा** । सुविरूढमूला ॥

**वृषाचलपतेः पादे** । तस्य पादे रूढा । पादे विनतानामिति वाऽन्वयः ।

**मुखकान्तिपत्रलच्छाया** । भगवन्मुखनीलिमाविरचितपर्णबाहुल्येन प्रच्छायं भवति । विनत्यां कृतायां मुखे प्रसन्नतारूपकान्तिर्जायते ॥

**करुणे सुखयसि** । दुःखनिराचिकीर्षारूपा दुःखरूपा वा भवतु

भवती, विनतानुसरत्येव भवतीति व्यज्यत इव । विनतमनुसरयितृत्वे न केऽपि संशेरते ॥

**विनतान्**। 'विनतविविधभूतव्रातरक्षैकदीक्षे—' इत्यस्य प्रत्यभिज्ञापनमिव । विनतेभ्यस्तत्संबन्धिव्रातेभ्यश्च छाया, फलानि च दीयन्ते ॥

**कटाक्षविटपैः**। दया वृक्षत्वेन रूपिता । भगवतः कटाक्षाणां विटपत्ववर्णनं स्वरसमिव ॥

**करापचेयफलैः**। विनतत्वावस्थायामेव ग्राह्याणि । नोत्थायोद्बाहुभावमवलम्ब्य ग्राह्याणि। 'भवन्ति नम्रास्तरवः फलोद्गमैः।' विनतादपि नम्रतरत्वं फलभरितशाखानाम् । भूतलस्पर्शि विनतजनकरतलं। करतलाधःप्रविशन्ति फलानि। अत्र फलान्यपवर्गेतराणि। तस्यानन्तरश्लोके पृथग्वक्ष्यमाणत्वात् ॥

**नयने वृषाचलेन्दोस्तारामैत्रीं दधानया करुणे ।**
**दृष्टस्त्वयैव जनिमानपवर्गमकृष्टपच्यमनुभवति ॥ २० ॥**

फलानि लभ्यन्ते । न तावन्मात्रेण परितुष्यामः । भगवतोऽहैतुकी सहजा मैत्र्यस्मासु प्रसरेदिति खलु कांक्षामः । अहैतुकी भगवन्मैत्री, अहैतुकप्रायोऽकृष्टपच्यो मोक्षश्च भवतु दयाया घटनयेत्युच्यते ।

'अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया'
'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः—'
'स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धम्—'

' यत्र लौकिकानामुपचारस्तारामैत्री चक्षूराग इति तदप्रतिसन्धेयमनिबन्धनं च प्रमाणमामनन्ति।' इत्यादिकमिह भाव्यम् । अस्मिञ्छ्लोके उत्तरश्लोके च

'सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन् कुरवश्चकासति ॥'

इति किरातार्जुनीयश्लोक आचार्यबुद्धौ परिवर्तत इति भाति अकृष्टपच्यमित्यत्र । अनन्तरश्लोके कृषीवलः, समयोपनतदयानदीप्रवाहैरित्यदेवमातृकत्वम् ; सस्यमालिनीति सस्यसम्पच्च प्रस्तूयन्ते । कृतपरिचया अस्मद्-

गुरवो भारविग्रन्थे ।

'मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।'

इति किरातार्जुनीयश्लोक उदाहृतो भट्टपादैः ॥

**नयने वृषाचलेन्दोः** । वृषाचलशिखरे नित्योदितोऽयं पूर्णचन्द्रः चन्द्रकान्ताननस्य तस्य नयने । 'तारामैत्री' इति न मुख्यार्थकत्वं स्यादिन्दुत्वानिरूपणे । इन्दोस्तारासु प्रियपत्नीषु सहजा मैत्री ॥

**तारामैत्रीम्** । पत्नीस्नेहम् । पत्नीबुभूषा वर्तते विनतस्य । स्नेहस्य निरुपाधिकत्वम्, सहजत्वरूपाहैतुकत्वं च द्योत्यते । 'तारामैत्री चक्षूरागः' इति पृथगिव वर्ण्यते लोके । अत्र नयने तारामैत्रीमित्युभयोरैक्यवर्णनम् ॥

**दधानया करुणे** । विदधत्या ॥

**दृष्टस्त्वयैव जनिमान्** । 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः' इति प्रमाणवचने दयाशीतलाः कटाक्षा एवाभिप्रेयन्ते । न दृष्टिमात्रम् । अतो दयया दृष्टत्वमेव सात्त्विकत्वमोक्षार्थचिन्तकत्वप्रदम् । जायमानकटाक्षस्य मधुसूदनीयत्वेन प्रमाणवर्णनमनुसृत्य 'मधुमथनदये त्वां वारिधाराविशेषैः' इत्युत्तरत्र वक्ष्यते ॥

**अपवर्गमकृष्टपच्यमनुभवति** । स्वाभाविको मोक्षः । स्वभावभूतस्यैव तस्याप्रकाशः कर्मकृतदयानिरोधेन । दयानिरोधकस्य तस्य निरोधे अपवादापवादे उत्सर्गस्य प्रसिद्धिरिव मोक्षः सिद्धः । 'स्वेन रूपेणाभिनिष्पद्यते,' नागन्तुकेन केनचिद्रूपेण । तिरोधानमात्रमस्ति नित्यसिद्धस्य स्वरूपस्य कर्मजनितात्परराभिध्यानात्परसङ्कल्पात् । तन्निग्रहसङ्कल्पस्य पादप्रणत्या तिरोधाने किमर्था कृषिः । भक्तिः कृषिः । तां कृषिं विना फलं लभ्यते । कथं कृषिं विना धान्यादिफललाभः ? कारणं विना कार्यनिष्पत्तिं वदन्समयः कथं सुसमयः स्यात् ? किं कृषिर्धान्यभोजिनैव कार्या ? भोक्तृव्यतिरिक्तैः कृषीवलैः किं न क्रियते कृषिः ? अस्ति कृषीवलो भगवान्सत्कृषिभारवोढा । तस्मात्सुसमय एवाकृष्टपच्यवादी समयः सति वृषशैलेश-

कृषीवले, यत्कोर्तिनं क्रियतेऽनन्तरश्लोके । अकृष्टमिति यद्यप्यस्वामिने कृष्टमकारवाच्येन भगवता कृष्टम् । 'अकारो विष्णुवाचकः' इति प्रसिद्धम् ॥ २० ॥

समयोपनतैस्तव प्रवाहैरनुकम्पे कृतसंप्लवा धरित्री ।
शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोति ॥ २१ ॥

दयया भगवते विधीयमाना उपकारा अस्मिन्दशके प्रदर्श्यन्ते । यद्यपि वयं दयादत्तफलभागिनः, प्रधानफली स एव । प्रधानफलिनः फलस्य प्रथमसङ्कीर्तनं न्याय्यम् । भगवतेऽपि फलदा दया । ध्रुवं भगवान् दयाधीनः । दयाप्रभावबोधकः शरणागत्युपायप्रदर्शकोऽस्मत्समयः । यतिपतियामुनप्रभृतयः प्रथयन्त्येतत्समयम् । समयश्चायं दयासमयः । दयैकालम्बनो दयाशरणवरणसमयः । शरणागतसस्यवृद्धिरूपफलाकांक्षी तदर्थं कृषिं चिकीर्षन्वृषाचलमायातः । पापनाशकोऽयं वेङ्कटगिरिः । धर्मगिरिरयं वृषाचलः । अस्मिन्नुत्तमक्षेत्रे कृषिः सद्यः फलवती स्यात् । 'अकृष्टपच्यमनुभवति' इत्युक्तम् । तत्सम्भवश्च शरणागतिसमय एव । औपच्छन्दसिकं वृत्तमाश्रीयतेऽत्र । दयया वृषाचलेशोपच्छन्दनम् ; दयोपच्छन्दनं च कविना । दययाऽस्मदुपच्छन्दनं च 'उपच्छन्दय दये' इति वक्ष्यते उत्तरत्र ॥

समयोपनतैस्तव प्रवाहैः । 'तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।' समय इति सुकृतपरिपाकरूपदयाप्रसरावकाशसमयो वा, यतिपतियामुनप्रभृतिप्रवर्तितदयासमयो वा ; तत्समयप्रदर्शितशरणागत्यनुष्ठानसमयो वा । दयायां भरन्यसने तत्क्षणमेव निरर्गलं प्रवहति तत्पूर्वमसदौद्धत्यादिना सन्निरुद्धा दया । 'शरणागतसस्यमालिनी' इति सस्यभूयस्त्ववर्णनेन शरणागतिरूपहितप्रदर्शकसमयग्रहणं स्वरसम् । 'यतिपतियामुनावतारानन्तरं प्रपन्नबाहुल्यम् ; तत्पूर्वं विरलाः प्रपत्तारः' इति निक्षेपरक्षायामुक्तम् । एवं च दयापरिवाहभूतसमयाचार्यकृतोपकार-

कीर्तनेन दशकोपक्रमः । दयानदीमातृकोऽयं कृषीवलः । अस्य सस्यसम्पत् ध्रुवा । दयानद्याः प्रवाहाः सुलभाः, ध्रुवाश्च ॥

**अनुकम्प कृतसंप्लवा धरित्री** । नदीप्रवाहैः कच्छाः स्वच्छन्दं संप्लाव्यन्ते । 'उभयतो रोधोनिरोधोल्लसत्स्रोतःसम्भृतसारणीशतकृतस्वच्छन्दकच्छाप्लवाम्' इति कावेरी वर्ण्यते ॥

**धरित्री** । विश्वधारिणी भूमिः । उपनतजलस्य केदारेषु निर्गमं विना जलस्य धरित्रीत्यस्य पदस्य स्वारस्यम् । सद्योजातबहुप्रजाधारणाद्धरित्री भवति । बहुसद्योजातप्रजाधरित्री पूर्वं वन्ध्येवाभूत् । 'क्रम्ये राक्षसपर्वतैः' इति पापभराक्रान्तासुरजनभाराक्रान्ततया या चक्रन्द सेदानीं सत्त्वोत्तरप्रजाधरणेन हृष्यति ॥

**शरणागतसस्यमालिनी वृषशैलेशकृषीवलं धिनोति** । एतत्समयप्रचारेण भूयसी शरणागतसस्यवृद्धिः । मालयेवालंकृता भवति सस्यमालया । 'अर्धसञ्जातसस्येव वृष्टिं प्राप्य वसुन्धरा' इति जललाभेन सस्यप्ररोहे धरित्र्या हर्षो भूयान् । प्रजामालेयं सस्यमाला । इतराः प्रजा असत्य इव । वन्ध्या पृथिवी इतरासु प्रजासु सतीष्वपि; तासामसत्कल्पत्वात् । सत्यः प्रजा इमाः । मालालंकृता पत्नी भर्तारं प्रहर्षयति । इयमिति कृषीवलस्य प्रात्यक्षिकानुभवः, कवेरनुभवश्च । शरणागतभूयस्त्वं कवेः प्रत्यक्षम् । 'धिनोति' इति भगवतो हर्षावहत्वरूपो दयाकृत उपकारः स्पष्टमुच्यते ।

'शरणागतसस्यमालिनीयं तव मुक्तामणिरश्मिनिर्झरौघैः ।
ननु रङ्गधुरीणपादरक्षे जगती नित्यमदेवमातृकाऽभूत् ॥'

इति पादुकाश्लोकोऽपि सारविश्लोकस्याचार्यबुद्धिस्थत्वे प्रमाणम् ॥ २१ ॥

**कलशोदधिसम्पदो भवत्याः करुणे सन्मतिमन्थसंस्कृतायाः ।**
**अमृतांशमवैमि दिव्यदेहं मृतसञ्जीवनमञ्जनाचलेन्दोः ॥ २२ ॥**

भगवद्दिव्यविग्रह एव दयासम्पादितो दयापरीवाहः । केवलं दयया तद्वि-

महाविर्भावः

'मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्'

इति भोग्यतमदिव्यविग्रहलाभो दयाद्वयया । महानेष उपकारो भगवतः । 'यदर्थमम्भोधिरमन्थ्यबन्धि च' इति पत्नीलाभाय महान्संरम्भो भगवतः । तदर्थं कलशोदधिरमान्थि । अत्र पत्न्या दयया शुभतमापूर्वपतिविग्रहलाभाय कलशोदधिसम्पदः स्वस्यैव मथनं क्रियते । शुभमतिरूपशुभसङ्कल्पो मन्थानो भवति । मतिमन्थानमास्थाय महाभारतचन्द्रमा लब्ध इति श्रूयते । देहविशिष्टश्चन्द्रबिम्बम् । अमृतकिरणश्चन्द्रः । दिव्यदेहस्यामृतसारत्वं तद्ध्यानेन मृतत्वस्यापगमात् । अमृतविशिष्ट इन्दुर्भगवान् । अमृतं विग्रहः । विशेषणांशोऽमृतांशः । शरणागतसस्यमालिनीत्युक्तम् । कुत्र शरणागतिः क्रियेत ? अर्चारूपदिव्यमङ्गळविग्रहविशिष्टे श्रीनिवासे । तल्लाभो दयाप्रभावेनेत्युच्यते । स्वरूपापेक्षयापि विग्रहस्य सारतरत्वं व्यज्यते ॥

**कलशोदधिसम्पदो भवत्याः** । क्षीरहृदया दया क्षीराब्धित्वेन रूप्यते । भगवान् स्वान्यमब्धिं ममन्थ श्रीहेतोः । इयमात्मानमेवाब्धिं मथ्नाति, दयात्वात् । नेतरमथनं दया कुर्यात् । स्वात्मानमेव मथ्नाति 'जगद्धिताय' ॥

**करुणे सन्मतिमन्थसंस्कृतायाः** । मथनेनोदधेः संस्कारः । सतां मतिस्तदिच्छा सन्मतिः । तदिच्छामनु भगवद्विग्रहाविर्भावः सहजः । दयायाः शोभनमतिर्वा । भगवतः शुभसङ्कल्पो वा ॥

**अमृतांशमवैमि** । अमृतसारं निश्चिनोमि । आश्रयो ऋजीष इव ॥

**दिव्यदेहं मृतसञ्जीवनम्** । दयया लम्भितोऽयं दिव्यविग्रहो मृतसञ्जीवनः । अन्वर्थामृतसंज्ञास्य । जीवानां मृतत्वतौल्यापादकं पातकम् । सर्वपातकविनाशनमेतदमृतबिम्बसन्दर्शनमात्रेण । सद्योऽमृतत्वप्राप्तिश्च ॥

**अञ्जनाचलेन्दोः** । दयोदयाचले उद्गतोऽयं चन्द्रः । नी-

लाञ्जनाद्रेस्तुङ्गशृङ्गस्थितमिदं रजनीनाथबिम्बम् । संस्कारकाळरात्रावयं चन्द्रस्तिमिरमपोहति ॥ २२ ॥

**जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभावभूता ।**
**प्रळयारभटीनटीं तदीक्षां प्रसभं ग्राहयसि प्रसत्तिलास्यम्॥ २३ ॥**

यदि दयापराधीनः श्रीनिवासः कथं तस्य दयाविरुद्धक्रोधावेशस्तदा तदा। अत्रोच्यते । स्वाभाविकी दया तस्य । औत्सर्गिकी दया ।' अपवादा उत्सर्गमेव द्रढयन्ति' इति पाश्चात्यानामाभाणकः । अपवादापवादेन उत्सर्गस्य द्रढिमरूपप्रसिद्धिः । प्रबलतमापवादः प्रबलतमकोपेन । स च संवर्तकालिकः । तस्यैव प्रसादनं यदि दयया कार्येत, दयापराधीनत्वं दृढप्रतिष्ठं भवेत् ॥

**जलधेरिव शीतता** । 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति जलमात्रस्य शीतत्वं प्रकृतिः । किमुत महाजलाशयस्य जलधेः । उदधिगम्भीरस्य भगवत उदधिनिदर्शनं भवेत् । 'स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा । सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥' इत्युच्यते ॥

**दये त्वं वृषशैलाधिपतेः स्वभावभूता** । 'स्वाभाविकी तव दया यदि नान्तरायः' इत्युक्तरीत्या त्वमेव स्वाभाविकी । इतरे त्वागमापायिनोऽनित्याः । तांस्तितिक्षसे त्वम् ॥

**प्रळयारभटीनटीं तदीक्षाम्** । ईक्षामिति 'स ईक्षांचक्रे ।' इतीक्षापदघटितश्रुतिग्रहणम् । 'ईक्षामीक्षणं चक्रे' इतीक्षाशब्दस्य भिन्नपदत्वेन व्याख्यानं श्रीशङ्करभाष्ये । अनुप्रयुज्यमानलिडाश्रयणेऽपीक्षेत्यक्षरानुपूर्वीमात्रस्य ग्रहणेनेक्षायाः स्त्रीत्वमेष्टव्यम् । 'स ईक्षां चक्रे' इत्यत्र भगवतः पुंस्त्वनिर्देशः । पत्नीं प्रति विज्ञापनावसरे पत्युः क्लीबत्ववाचिकाः 'तदैक्षत' इत्यादिश्रुतयो न ग्राह्यास्तुल्यार्थकत्वेऽपि । सृष्टिसङ्कल्पवाचिश्रुतयः प्रळयसङ्कल्पस्याप्युपलक्षिकाः । यद्यपि 'सोऽकामयत' इत्यत्र पुंस्त्वं श्रूयते भर्तुर्न तत्रेक्षारूपस्त्रीलिङ्गशब्दः । नटीत्वापेक्षितं स्त्रीत्वम्, भर्तुः पुंस्त्वमित्युभयं

श्रूयते 'स ईक्षां चक्रे' इति श्रुतौ । सा श्रुतिः प्रत्यभिज्ञाप्यते । आरभटीनटद्युद्धतताण्डवनर्तनवर्ती रौद्री । प्रळयस्य करुणामूलत्वमुपपादितमिदानीमेव 'प्रतिसञ्चरकेळिमाचरसि' इति । कथमुक्तविरुद्धमुच्यते? अत्रोच्यते । वस्तुतस्तस्य करुणामूलत्वमेव । तत्तु विरळविरळानां तत्त्वदर्शिनां बुद्ध्या । निर्घृणत्वमेव तस्य भूयसा प्रतीतम् । प्रायेण जनैर्गृह्यमाणा निर्घृणता समाधेयैव । लोकबुद्धिमनुरुद्ध्य प्रळयस्य क्रोधकार्यत्वमभ्युपगम्यात्र समाधिरुच्यते ॥

**प्रसभम्** । बलात् । अनिच्छतीमपि । झटिति ॥

**ग्राहयसि प्रसत्तिलास्यम्** । शमं नयसि । प्रसादं गमयसि । प्रक्रान्तं नाट्यं न विरमयसि । तदेव लास्यरूपेण विपरिणमयसि प्रसन्नेन मार्गेण । सर्वथा नृत्तस्य नोपरतिः । गात्रविक्षेपमात्रं नृत्तम् । नर्तयितृधुरां वहति दया । उद्धतताण्डवरीत्यनुसारिणीं नर्तकीं सरभसं क्षणमात्रेण ललितलास्यरीतिं ग्राहयति । एतेन प्रबलतमकोपस्यापि सद्य उपशमनं दयाप्रभावेनेति दयायाः स्वभावभूतत्वं दृढीक्रियते । लास्यं सुकुमारनृत्तम् । नृत्तसङ्कल्पं न वितथयसि ॥ २३ ॥

**प्रणतप्रतिकूलमूलघाती प्रतिघः कोऽपि वृषाचलेश्वरस्य ।**
**कळमे यवसापचायनीत्या करुणे किङ्करतां तवोपयाति ॥ २४ ॥**

संवर्तनक्रुद्धक्षायाः प्रसादनमुक्तम् । प्रणतजनप्रतिकूलविषयक्रोधस्य दयायाः किङ्करीभवनमुच्यते । कृषीवलो भगवान् । कृषीवलेषु प्रसिद्धेन दृष्टान्तेन क्रोधस्य दयाकिंकरत्वमुपपाद्यते— कृषीवलदयायाः कृषीवलदृष्टान्तः सम्यक्प्रसिद्धः स्यादिति । 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति भगवदवतारे निमित्तमुच्यते । साधुपरित्राणनान्तरीयकत्वेन तद्दुहृद्विनाशोऽपि कार्यः । साधुपरित्राणरूपदयाकार्यस्यानुषङ्गिकत्वेन दुष्कृद्विनाशः सद्यते । सस्ये यवसापचायनीत्यास्योपपत्तिः । 'यथेक्षुहेतोः सलिलं प्रसेचितं तृणानि वल्लीरपि च प्रसिञ्चति । तथा नरो धर्मपथेन वर्तयन्नर्था

कामांश्च वसूनि चाप्नुते ॥' इत्यपरो न्याय आनुषङ्गिकफलवत्त्वे ॥

**प्रणतप्रतिकूलमूलघाती प्रतिघः कोऽपि वृषाचलेश्वरस्य** । प्रणतप्रातिकूल्यं न सहेत प्रभुः । तज्जनितस्य प्रतिघस्य कोपस्य कोऽपीत्यपरिच्छेद्यत्वम् । मूलघाती स कोपः । ' मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः' इति हनूमद्वाक्यं रावणस्य घोरपापविषये । सीताविषयघोरप्रातिकूल्य इवाश्रितप्रातिकूल्ये कुप्येद्भगवानिति व्यज्यते ॥

**कळमे** । सस्ये ॥

**यवसापचायनीत्या** । एकः कळमः । बहवो यवसाः । यथैकस्य शब्दस्य बहवोऽपभ्रंशाः । यवसापचायं विना न कळमस्य प्ररोहसम्भवः । निर्मूलयितव्या यवसाः । अपचायपदेनातिसुकरो मूलघात इति व्यज्यते । पुष्पापचयवल्लवुत्वम् । नखाङ्गुल्यादिभिः प्रबलशलवो लूनशिरसो विदारितोरसो भवन्ति । 'यथोद्धरति निर्दाता कक्षं धान्यञ्च रक्षति' इति मनुः । निर्दाता क्षेत्रप्ररूढधान्यमध्यस्थिततृणोद्धर्ता ॥

**करुणे किङ्करतां तवोपयाति** । साधुपरित्राणरूपत्वत्कार्यकरत्वात्त्वत्किङ्करत्वम् ॥ २४ ॥

**अबहिष्कृतनिग्रहान्विदन्तः कमलाकान्तगुणान् स्वतन्त्रतादीन् ।**
**अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति सन्तः ॥ २५ ॥**

न केवलं युक्तिवादः क्रियते मया त्वत्परत्वस्थापनाय । महाजनानुष्ठानमत्र संवदतीत्युच्यते ॥

**अबहिष्कृत निग्रहान्** । निग्रहस्य बहिष्कृतकार्यत्वं त्वद्बुद्ध्या । यथा पतितादयो बहिष्क्रियन्ते, तथा निग्रहस्त्वया दूरतो निरस्यते । पतनहेतुरिव निग्रहः । पातकिन इव तस्य स्पर्शसंव्यवहारादिकं त्वं न सहसे । इतरे श्रीनिवासगुणाः स्वतन्त्रतादयो निग्रहमूरीकुर्वन्ति, लालयन्ति च । निग्रहाद्वयमपराधिनो बिभीमः । महान्दोषो निग्रहोऽसद्बुद्ध्या । नित्यमज्ञातनिग्रहा त्वम् ॥

**विदन्तः**। विदुषामिदमनुष्ठानं दयैकभजनम्; नाविदुषाम्। 'विद्वांसो अलुब्धा धर्मकामाः स्युः' 'तस्यैवं विदुषो यज्ञस्य॥'

**अविकल्पमनुग्रहं दुहानाम्**। अनुग्रहैकदोग्ध्री त्वम्। वयं वत्साः। त्वं धेनुः। 'यथा तरुणवत्सा गौः'॥

**भवतीमेव दये भजन्ति सन्तः**। 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इति भगवद्वचनं तद्दयायां त्वयि योजयन्ति। भवतीमेव दये भजन्तीत्येवकारेण दयागुणस्य प्राधान्यं भगवद्भजने; भगवतोऽप्यप्राधान्यम्। विदन्तः, सन्त इति समभिव्याहारेण 'अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः' इति न्यायोऽभिप्रेयत इव। भजन्तीति परस्मैपदेन भजनक्रियाफलं दयाया एवेति प्रत्याय्यत इति श्रीरामानुजाचार्याः॥

**कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम्।**
**अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेव भीतिः॥२६॥**

बहिष्कृतनिग्रहत्वाद्दयाभजनमित्युक्तम्। दुरितानि दयैका निगृह्णाति। इतरे गुणास्तानि न निगृह्णन्ति। दुरितानां सर्वभोषकाद्भगवतोऽपि न भीतिः। त्वत्त एव तेषां भीतिः। निर्भयत्वं निष्पाद्यं दयया। भयमेवोत्पद्यते दुरितानामिति, कथमिति पृष्टे—उच्यते। सत्यं निष्करुणा दया स्वाश्रितदुरितेषु। भूषणमिदम्, न दूषणम्। आश्रितदुरितविषयं निष्करुणत्वं नाम तद्दुरितमूलघातः। दयाकाष्ठा तद्भवेत्। दोषप्रतिभटत्वं न दोषाय। प्रत्युत गुणाय॥

**कमलानिलयस्त्वया दयालुः**। दयालुरिति महाद्बिरुदं रक्षकस्य। 'शरणागतानां संरक्षितेति बिरुदं वरद त्वदीयम्' इति वरदराजस्तवे। 'मृदुर्दयालुर्मधुरः—'इति स्तोत्ररत्ने। अवनरूपाकारार्थ एव लुप्येत दयाऽभावे। दयालुरिति बिरुदं निरतिशयशोभावहं भगवतः। अयमपरो महोपकारो दयाकृतः॥

**करुणे निष्करुणा निरूपणे त्वम्**। स्वाश्रयं दयालुं करोषि।

त्वं तु स्वयं निर्दया । 'परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् । धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः ॥' इति वचनस्य त्वमपि विषयीभवसि । निष्करुणत्वं चाश्रितदुरितविषये इत्युत्तरार्धे उच्यते । स्तुतिपर्यवसायिनीयं निन्दा । तस्मान्नास्य श्लोकस्य दयास्तोत्रत्वहानिः । व्याजस्तुतिः 'कः स्वर्धुनि विवेकस्ते नयसे पापिनो दिवम्' इतिवत् ॥

**अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेव भीतिः।**

'भीषास्माद्वातः पवते' इत्यादिश्रुतिभिः सर्वेषां भगवतो भयं प्रदर्श्यते । दुरितानां न भयं भगवतः । तद्धृदय एव स्थिरमुल्लासिकां लभन्ते तानि । तेषां दयात एव भीतिः । न प्राणिकृतप्रायश्चित्तेभ्यो भयम्, तेषां प्रायश्चित्तानां दुष्करत्वात् । सैव तेषां भक्षयित्री । चराचरस्यात्ता भगवान्न तेषामत्ता भवति । तावकम्, त्वदाश्रितम् । अभयं देयं दययाश्रितस्य । कुतो भयमाश्रितस्य ? 'पापेभ्यः' 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति भगवच्चरमोपदेशः प्रियतमायार्जुनाय । आश्रितजनस्याभयम्, तद श्रितदुरितानां चाभयमित्युभयमत्यन्तविरुद्धम् । आश्रिताय दुरितेभ्योऽभयदाने कथं दुरितानामेवाभयदानसम्भवः ? स्वाश्रयत्वसम्बन्धात्स्वाश्रयाश्रितत्वसम्बन्धो व्यवहितः । सन्निकृष्टत्यागाद्व्यवहितत्यागो वरम् । संबन्धविप्रकर्षो व्यज्यते तावकाश्रितानामिति । तावकस्त्वदाश्रयः । तदाश्रितानि स्वाश्रयाश्रितानि । तार्किकसिद्धोऽयं कविसिद्धः । धर्मिहानितो धर्महानिर्वरम् । आश्रितत्यागो वा, तद्दुरितत्यागो वेति विकल्पे दुरितत्याग एव न्याय्यः ॥ २६ ॥

**अनिलङ्घितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्विजृम्भितोष्मा ।**
**पुनरेव दये क्षमानिदानैर्भवतीमाद्रियते भवत्यधीनैः ॥ २७ ॥**

भगवतः कोपं शमयति दयेत्युक्तम् । तावता भगवतः क उपकारः । कोपो नामोष्णिमा । ज्वरार्त इव भवति क्रुद्धः । हृदयं दह्यते क्रोधेन । उपकार एव तदनुत्थितिः ; तच्छान्तिश्च । अत्र भगवतो

दयास्वभाववत्त्वमप्याथनन् ; दयानुत्वाविरुद्धस्वावाध्यन्वोक्तिश्च ॥

**अभीक्ष्णम्** । सहस्रकृत्वः । 'सहस्रशो यत्र मया व्यधायि' ॥

**अतिलंघितशासनेषु** । 'श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते' । स द्रोहीति मन्यते भगवता । भृशं लंघिताज्ञाः । प्रमाणवचनस्थोल्लङ्घयशब्दानुसारेणातिलङ्घनमुच्यते । न केवलं लङ्घनम् ॥

**वृषशैलाधिपतिर्विजृम्भितोष्मा** । आज्ञाच्छेदे सहजोऽधिपतेः कोपः । कोपनिबन्धनोष्णिमा सहजः । स च विजृम्भते, विशेषेण वर्धते ॥

**भवत्यधीनैः क्षमानिदानैः** । त्वयैव क्षमापणे प्रवृत्तिं कार्यते । त्वमेव पुनःप्रपदनादिप्रायश्चित्तं कारयित्वापराधं क्षमापयसि ॥

**पुनरेव भवतीमाद्रियते** । पुनः कोपं निरस्य त्वद्वशो भवति । पुनःप्रपदनं नाम पुनर्दयाप्रार्थनमेव ॥ २७ ॥

**करुणे दुरितेषु मामकेषु प्रतिकारान्तरदुर्जयेषु खिन्नः ।**
**कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ॥ २८ ॥**

'त्वं मेऽहं मे' इति भगवता वयं युद्ध्यामहे । दयाविशिष्टः शेषी भगवान्स्वदासानस्मान् यथा कथञ्चिद्वशीकर्तुमिच्छति ; प्रणष्टस्वत्वात् । वयं तु तन्मनोरथभञ्जकास्तत्प्रतिपक्षा एव भवामः । तत्प्रतीपमेवाचरामः । अभीक्ष्णमपराधसहस्रैस्तद्धृदयमर्मच्छेदं कुर्मः । भूयो भूयो गरीयोभिरपराधैस्तद्धृदयवेधने कथं तच्चिकीर्षितमस्मद्रक्षणं निर्वर्तयितुं स पारयेत् । अपराधशरवेधनं परिहर्तुकामो दययात्मानं कवचयति । अस्मज्जयानुकूलकालं प्रतीक्षमाणो वृषाद्रावास्ते । भगवतोऽस्मद्वशीकरणं त्वयैव साध्यम् । वयमपराधकरणान्न कदाऽपि निवर्तेम हि । कृतानामपराधानां च न निष्कृतिं कुर्याम । अपराधक्षान्तिं विना नान्य उपायः । क्षान्तिश्च त्वमेव । अतो दयैव गतिरस्मज्जये ॥

**करुणे दुरितेषु मामकेषु** । अकिञ्चनत्वेऽप्यस्त्यनन्तं दुरितशस्त्रम्; येन वयं भगवद्धृदयं वेद्धुं प्रभवामः । दुरितान्येव विषशल्यानि रक्षक-

हृदयं विह्वयन्ति । तं च जयं प्रति निराशं कुर्वन्ति

प्रतिकारान्तरदुरवग्रहे । दयां विना नान्या गतिरस्ति दुरितनाशने । क्षान्त्या विनाऽन्यः प्रतीकारो न शक्यः । क्षान्तिश्च दयैकाधीना । प्रायश्चित्तरूपं प्रतीकारमस्मान् कारयितुं न प्रभवति सः ॥

निरुद्धः । नैराश्यमापन्नः ।

शार्ङ्गी । धनुष्पाणिरपि सन् ॥

**कवचायितया त्वयैव** । दयाकवचेनात्मानमावृण्वन् । प्रायश्चित्तरूपप्रत्यस्त्रमस्मासु योजयितुमस्मद्दुरितानि न यच्छन्त्यवकाशम् । पश्चायुर्वा नोवाऽभूत् । 'तितिक्षावर्मयुक्तस्य प्रतियाति न दृश्यते' इति आर्षवचनमत्र भाव्यम् ॥

**विजयस्थाने कृपाद्रिदुर्गमाश्रितः** । 'जीवन्भद्राणि पश्यति' 'एति जीवन्तमानन्दो नरं वर्षशतादपि' इत्यादिवचनानि हृदि निधायाथ वा, अब्दशनान्ते वा विजयी स्यामित्याशासानो विविक्तमद्रिदुर्गमाश्रित इव।

'सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥'

इति मनुवचनमाद्रियत इव ॥ २८ ॥

**मयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान्विचिन्वती त्वम् ।**
**अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री ॥ २९ ॥**

यदि त्वं मद्भर्तृप्रतियोद्धा, अपराधशतैश्च तमभीक्ष्णं वेदयसि, किं मया तव क्रियेत ? कथं त्वामहं रक्षेयम् ? एवमाक्षिप्ते—प्रतिवदति । अहं दुष्कृतां प्रधान एव । तत एव हेतोरनुत्तमं पात्रमहं तव । न्यूनदुष्कृतानां रक्षणे न तव पुष्कलबहुविधविचित्ररसाहारलाभः । आशानि प्राणि दुरितानि तवान्नम् । यावन्ति दुरितानि तावदन्नम् । 'अनुत्तमं पात्रमिदं दयायाः' । अलभ्यलाभोऽयम् । पुष्कलाहारालाभे त्वं कथं भवित्रीति त्वमेव दयनीया भवेः । भूत्वा खलु पत्या योगः ॥

**मयि तिष्ठति दुष्कृतां प्रधाने** । अपराधिसार्वभौमे मयि स्थिते । पुष्कलाहारमादाय मयि पुरतः स्थिते ॥

**मितदोषानितरान्विचिन्वती त्वम्** । स्वल्पापराधिनो रक्षणार्थं गवेषयन्ती । पुरः स्थितं मां परित्यज्य स्वल्पापराधिगवेषणे 'सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः' इति न्यायविषयो भवेः ॥

**अपराधगणैरपूर्णकुक्षिः** । अपराधा गणशः सन्ति मयि । न तथेतरस्मिन् जने । अहमेव त्वत्कुक्षिं पूरयेयं बहुत्वेन । गणानां बहुत्वम् ॥

**कमलाकान्तदये कथं भवित्री** । तवैव लोपः स्यादिति शोचामि ।

**अहमस्म्यपराधचक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी ।**
**विदुषी स्थितिमीदृशीं स्वयं मां वृषशैलेश्वरपादसात्कुरु त्वम् ॥ ३० ॥**

दयया भगवते निर्वर्त्यमाना उपकाराः कथिताः । दयानिर्वर्तितस्वोपकारा अपि कीर्तनीया इत्याक्षिप्ते दशकप्रतिपाद्यं भगवदुपकारित्वमविहाय दयाकर्तृकत्वोभयोपकारप्रदर्शनेन दशकं निगमयति । स्वस्य च बन्दीकृत्य दयया वृषाचलप्रवेशनं सम्पादयति । प्रतिपक्षराजस्य जयो दुर्लभः । दया प्रतिपक्षचक्रवर्तिनं जित्वा स्वभर्तृपादसात्करोति ॥

**अहमस्म्यपराधचक्रवर्ती** । 'अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्योऽमृतस्य नाभिः' इति साधुभिर्गीयेत । 'अहमस्मि' इत्युपक्रम्य 'अमृतस्य नाभिः' इत्यस्य स्थानेऽपराधचक्रवर्तीति वच्मि । नाभिश्चक्रमध्यवर्ती । नाहममृतस्य नाभिः ; किन्त्वपराधचक्रस्य नाभिः । सदाऽपराधगणानां मध्यदेश एव स्थितिः । न कदाऽपि पर्यन्ते वा, बहिर्वा वर्तनम्; विरिरंसाया अनुदयात् । 'अहमन्नमन्नम्' इति गायति श्रुतिः । मत्पापान्यन्नमित्यहं गायामि । अपराधचक्रं वर्तयामि स्वेन स्वसङ्गिभिश्च । प्रतिपक्षचक्रवर्तिनो जयः प्रीतिकरः ॥

करुणे त्वं च गुणेषु सार्वभौमी । सार्वभौमो भक्तियोगः । सार्वभौमो निरोध इति हंससन्देशे । प्रपत्तियोगसाधिका त्वं सार्वभौमी । मयि चक्रवर्तिनि जिते सर्वे जिताः स्युः । प्रधानमल्लनिबर्हणन्यायस्तव विदित एव ॥

वृषशैलेश्वरपादसात्कुरुत्वम् । सार्वभौमी त्वं प्रतिभटचक्रवर्तिनं मां शैलेश्वरपादं नय । तत्पादप्रणतामितरवैमुख्येन तदेकरसं मा कुरु ॥ ३० ॥

अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ
वपुषि गमनयोग्ये वासमासादयेयम् ।
वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतै-
र्मधुमथनदये त्वां वारिधाराविशेषैः ॥ ३१ ॥

प्रतिभटचक्रवर्ती वन्दीकृत्य न्यायसभां नीयते दण्ड्यत्वादण्ड्यत्वनिर्णयाय । तत्र तद्विषये विचारणा प्रचलति । ज्ञानशक्त्यादयो महागुणाः अपराधसहस्रं प्रदर्शयन्ति क्रूरदण्डविधानार्थम् । यथा विभीषणपरिग्रहविषये राघवगोष्ठ्यां विवाद स्तथात्र महति समाजे विवादो भवति वादिप्रतिवादिनाम् । गुरुतरपापानि विभीषकाणि । साचिव्याधिकारिण्यः सर्वा अपि प्रतिवादूकया वशीकृताः । पक्षपातानभिज्ञोऽपि प्रभुरेकः किं कुर्यात् ? सर्वाः सचिवा दयापक्षपातिन्यः । अध्यक्षोऽपि स्वीक्रियते दयया । अपराधानां का गतिः ? न तैरमोघैर्भवितव्यमित्याक्षिप्ते तत्प्रयुक्तभाविजन्मभेदा अपराधिभारवाहिनाध्यक्षेणैव वोढव्या इति निर्णयो भवति । दण्ड्यो दण्डान्मुच्यते । अध्यक्षस्य प्रभोस्तद्दण्डविधानम् । एवं निर्णयस्थितिर्दयाराज्ये । कोसलविषयवासिनां भगवदधिष्ठितविषयवासमात्रेण मुक्तिरभूदिति भगवद्दयाप्रभावो वर्णितः श्रीकुलशेखरमुनिना द्राविडगाथासु । तुल्यन्या-

येनात्र वेङ्कटगिरिवासप्रार्थनेन मुक्तिभोग्येन । शरणागतमध्ये मालिनीस्तुतं पुष्टिविधकारम्भ । मालिनीवृत्तलक्षणमुपस्थितं तत्र । प्रक्रान्तेनोपच्छन्दसिकवृत्तेन दशकं समाप्यानन्तरदशकं मालिनीवृत्तेन प्रणिनाय । यथा मालिनी धन्वी भगवन्तं विनोति, तथा स्तुतिरपि मालिनीभूय भगवद्दयां विनोतु । 'मालिनी भोगिलोकैः ।' अत्र भोगिलोकशब्दवर्णनं वृषगिरेः ॥

अशिथिलकरणे । विषयसम्भोगाय करणपाटवमपेक्षामहे । विषयभोगशक्त्यभावे कदाचिद्विरज्याम इव विषयेभ्यः । 'निर्दिष्टं यतिभावेभोभवचसामावृत्तिभिर्यौवनम्' इत्युक्तरीत्या खलु यौवननिर्वेदो न्याय्यः । करणपाटवे सत्येव भगवत्कैङ्कर्यानुभवो न्याय्यः । यौवने विषयैषिणो भूत्वा तद्भोगेन शिथिलितकरणा जरां प्राप्य जर्जरितदेहाः कथं भगवत्कैङ्कर्यं सम्यङ्निर्वर्तयेम । कृत्स्नं कालमविच्छेदेन श्रीवेङ्कटशिखरस्थज्योतिषेऽविच्छिन्नं कैङ्कर्यं कर्तव्यमिति श्रीशठकोपमुनयः । पटुकरणैः कैङ्कर्यं कार्यम् ॥

अस्मिन् वपुषि । अनेनैव देहेन श्रीवेङ्कटपतेः कैङ्कर्यकरणे तीव्रमनोरथः । आरोहक्षमं वपुरपेक्षितम् ॥

अक्षतश्वासवृत्तौ । श्वासवृत्तिदार्ढ्यमपेक्षितमारोहाय । बलिष्ठैः प्राणैर्विना नारोहः सुकरः ॥

वासमासादयेयं वृषगिरिकटकेषु । 'यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु' इति रामगिरिसविधवर्त्यनेकप्रदेशेषु वासवत्तत्र तत्र बहुषु कटकेषु वासं लभेय । तथा च कृत्स्नगिरिप्रदेशपरिचयो लभ्येत । यद्यपि भगवदनुभवरसिकः वासमात्रमासादयेयम् ॥

वारिधाराविशेषैस्त्वां व्यञ्जयन्तु । कठिनेषु शिलामयेषु कटकेषु वासे को वा गुणः ? आकाशगङ्गापापविनाशिन्यादिनिर्झरैर्भगवद्दया तत्र स्पष्टव्यक्तिं गच्छति । दयाधारास्ता वारिधाराः । निर्झरच्छलेन प्रवहति श्रीनिवासदया । न केवलं स्थलरमणीयकम् ; जलरमणीयक-

मपि । वेङ्कटगिरिनिर्झरानुभवः श्रीशठकोपमुनिभिरपि प्रकाशितः ॥

**मधुमथनदये** । 'मधुमथनविज्ञापनमिदम्' इत्यत्र मधुमथनपदं 'न हि त्वदन्य ईदृशप्रबलविरोधिनिवर्तनक्षमः' इत्यवतारितमाचार्यैः स्तोत्र-भाष्ये ॥ ३१ ॥

**अविदितनिजयोगक्षेममात्मानभिज्ञं**
**गुणलवरहितं मां गोप्तुकामा दये त्वम् ।**
**परवति चतुरैस्ते विभ्रमैः श्रीनिवासे**
**बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥ ३२ ॥**

जित्वा बन्दीकृतो राजसभां नीयते । तत्र विचारणायाः प्रागेव न्यायनिर्णयसाचिव्यभाजो देव्यो वावदूका दया च सम्मन्त्रयन्ते । देवीनां पुरुषकारेणाप्यवशीकृतश्चतुरैर्दयाविभ्रमैर्वशीक्रियते । दयया प्रभोर्वशीकरणे, नाभ्यसूयन्ति दयायै देव्यः, प्रत्युत ताभिर्बहुमन्यते दया । प्रीयन्ते च ताः । तत्प्रजारक्षणं खलु निर्वर्तितम् ॥

**अविदितनिजयोगक्षेमम्** । निजहितपरिज्ञानमेव नास्ति । दूरे तदनुष्ठानम् । योगोऽलभ्यलाभ उपायानुष्ठानेन । क्षेमो लब्धस्य परिपालनम् ॥

**आत्मानभिज्ञम्** । तिष्ठतु योगक्षेमज्ञानम् । आत्मापि न ज्ञातः ॥

**गुणलवरहितम्** । गुणलवस्य सद्भावो दयायाः सङ्कोचनिमित्तं भवेत् ॥

'बलिभुजि शिशुपाले तादृशागस्करे वा
गुणलवसहवासात्त्वत्क्षमा संकुचन्ती ।
मयि गुणपरमाणूदन्तचिन्तानभिज्ञे
विहरतु वरदासौ त्वद्दया सार्वभौमी ॥'

इति श्रीरङ्गराजस्तवे । गुणलव इत्यनभिज्ञ इति च तच्छ्लोकप्रत्यभिज्ञापनमिव । सार्वभौमीति तच्छ्लोकोक्तं परिगृहीतं 'गुणेषु सार्वभौमी' इति ॥

**मां गोप्तुकामा दये त्वम्** । उक्ताज्ञानादिदोषा दयनीयत्वे

हेतवः । ईदृशानधिकारिरिरक्षिषया करुणामूर्तिभूतपत्न्योर्बहुमतिं लभसे॥ ते चतुरैर्विभ्रमैः । तव चतुरचतुरविलासैर्भर्तृमोहनव्यापारैः ॥

श्रीनिवासे परवति । 'मत्तः परतरं नान्यत्' इति वदति ब्रह्मणि श्रीनिवासे परात्परे त्वया परवति ॥

बहुमतिमनपायां विन्दसि श्रीधरण्योः । 'परवानसि दयया' इति वादिनि भर्तरि प्रजानां निःश्रेयसनिश्चयाद्देव्यौ सुप्रीते सुप्रसन्ने भूत्वा त्वयि विशेषबहुमानं कुर्वाते । अस्मत्प्रजा महतो भयात्त्रायत इयं महाभागेति । 'विष्णोः श्रीरनपायिनी' । दयायां श्रियो बहुमतिरनपायिनीत्युच्यते । 'त्वं सपत्न्योर्बहुमतिं विन्दसि । त्वद्वशो भगवानवमतिं मन्दचित्तेषु विन्दति' इति विरोधश्चारु प्रदर्श्यतेऽनुपदमेव 'अवमतिमनुकम्पे मन्दचित्तेषु विन्दन्' इति ॥ ३२ ॥

फलवितरणदक्षं पक्षपातानभिज्ञं
प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं
प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥ ३३ ॥

न्यायसभायां विचारणा क्रियतेऽपराधचक्रवर्तिनो दण्ड्यत्वादण्ड्यत्वक्रियायै । बहवो महान्तो गुणा दण्ड्यत्ववादिनः । दयैका प्रतिवादिका । सर्वज्ञः पक्षपातानभिज्ञो दण्डधरः 'शास्ता जनानाम्' सभाध्यक्षः, सभान्तः प्रविष्टः । अपराधचक्रवर्ती दण्ड्यो मोच्यते । दया जयति । कोयं दयाप्रभावः ॥

फलवितरणदक्षम् । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्युक्तरीत्या कृतं कर्म कल्पकोटिव्यवधानेनापि न विस्मरति । भवितव्यमेव तस्य कर्मणः फलेन । कोऽस्माद्दक्षतरः । न तस्य साक्ष्यपेक्षा, चारापेक्षा वा । सर्वसाक्षी सः । सर्वं प्रत्यक्षेण वेत्ति ॥

पक्षपातानभिज्ञम् । 'समोऽहं सर्वभूतेषु' इत्युद्घोषयन् पक्षपात-

गन्धरहितः ॥

**प्रगुणमनुविधेयम्** । इयमेका गतिरस्त्यस्माकम् । प्रकृष्टगुणेनाष्टाक्षरमन्त्रेणाध्यक्षः सुविधेयो भवति । अष्टाङ्गयोगस्थानेऽष्टाक्षरमन्त्रजपः । प्रगुणमनुविधेयो भवन्तीति वा । अनुविधेयो नाम प्राड्विवाकोऽध्यक्षः ॥

**पत्त्रासहायम्** । लब्धा जयप्रत्याशा । मातृसहायं विना तस्याः सम्मतिं विना न कमपि निर्णयं कुर्यात् ॥

**प्राप्य** । आगत्य । मदर्थमसूर्यंपश्यया भवत्या सभा प्रविश्यते स्त्रीत्वसहजशालीनतां परित्यज्य प्रतिवावदूकया भूत्वा । महति गुणरूपपुरुषसमाजे प्रविश्यते । आञ्जिलेयकविसार्वभौमः काचिदाढ्या युवतिर्वीवदूकवेषधारिणी दयादिव्यप्रभावप्रस्तावीलसभायामिति चारु वर्णयति । दयिता दया प्रतिवावदूकत्वं वहति । तत्परिगृहीतपक्षस्य जये कः संशयः? ॥

**महति गुणसमाजे** । महती सभा । अनन्ता गुणाः पुमांसः प्रकृष्टा महान्तः सामाजिका दण्ड्यत्वपक्षवादिनः ॥

**मानपूर्वं दये त्वं प्रतिवदसि यथार्हं पाप्मनां मामकानाम्** । सयुक्तिकं सप्रमाणकं यथागमं यथान्यायं प्रतिवदसि मत्पापानामगणनीयताविषये । 'दुर्वारतीव्रदुरितप्रतिवावदूकैः' इति दयाभरितभगवदपाङ्गानां प्रतिवावदूकत्वमुक्तं देहल्यधीश्वरस्तवे । 'अथ वादिकृतं प्रमाणमन्यैः प्रतिवादीव निराकरोत्प्रमाणैः' इति माघे विंशसर्गे युद्धवर्णने । प्रतिवादक्रमश्चानन्तरश्लोके वक्ष्यते । मत्पाप्मानो मत्प्रतिपक्षभूताः । मामका मद्दायादा मत्पाप्मानो मत्प्रतिपक्षाः । स्वार्जितशत्रवः । 'पाप्मनां प्रतिवदसि' इत्युक्तेर्वादिभिः पाप्मान्युदाहृतानीति गम्यते ॥ २३ ॥

**अनुभवितुमघौघं नालमागामिकालः**
**प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ।**
**स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा**
**शिथिलितभवभीतिः श्रेयसे जायसे नः ॥ २४ ॥**

यथागमं यथान्यायं समीचीनोपपत्तिभिः खलु निर्णय द्रष्टव्यः । कथं सत्यानामनन्तापराधानामपलापः । अनन्त्येऽक्षुद्रवन्धः, अनन्त्यानि चेत्पापानि, अनुभवं निष्कृतिं वा विना ज्ञानमात्रेण तन्निस्तरणमसम्भवः ।

'मणिमन्त्रौषधैर्वापि दण्डवातादिनाऽपि वा ।
क्रियते नैव केनापि मायाकुण्डलिखण्डनम् ॥'

इति शतदूषण्यां पूर्वपक्षसंग्रहे । सत्यानि खलु पापानि, सत्यः खलु भवो भवत्समये । एवमाक्षिप्ते दयायाः प्रतिवादक्रमः प्रदर्श्यते । अयं चेतनोऽनन्तापराधकृदेव । सत्यमनुभवेन वा निष्कृत्या वा क्षप्येत कर्म । नान्येन पथा । एकैकस्य कर्मणः फलानुभवो न जन्मशतेनापि क्षीणो भवेत् । आगामिकालः कृत्स्नोऽपि नालमस्यानन्तापराधानां मध्ये कतिपयानामपि फलानुभवाय । अपरोक्षाचितदण्ड. फलवितरणदक्षेणापि भवता न वितरितुं शक्यते । सर्वथात्यन्त न्यून एव दण्डानुभवः स्यादपराधापेक्षया । दुःशके विषये किमर्थं भवता वृथा प्रयस्यते । निष्कृतिरशक्यास्य वराकस्य । वल्लभां मां परिष्वजस्व । दयस्व । पादयोः पतत्ययम् । दयया समस्तापराधान् क्षमस्व । 'त्वत्पादसात्कृतोऽयं मया' इति वदति । तत्र क्षमैव क्षमा ॥

**अघौघमनुभवितुम्** । राशिभूतानि पापानि । पापराशिमनुभवेन नाशयितुम् ॥

**आगामिकालो नालम्** । अपर्याप्तोऽनन्तोऽपि भविष्यत्कालः ॥

**निष्क्रियाभिरशेषं प्रशमयितुम्** । प्रायश्चित्तैर्निःशेषं शमं नेतुम् ॥

**न शक्यम्** । असाध्ये प्रवृत्तिः सर्वज्ञस्य दक्षस्य भवतो न न्याय्या । 'तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि' इति भवतैव गीतम् ॥

**इति हि** । एवं वादिनो त्वम् । इतीति प्रतिवदनप्रकारपरामर्शः । इत्युक्त्वा श्रीनिवासं स्वीकरोषि ॥

इये स्वयं त्वम् । सहजवात्सल्येन स्वयं प्रतिवदनभारं वहसि । न धनाद्यर्थम् ॥

**स्वीकृतश्रीनिवासा** । सभाध्यक्षोऽपि स्वीक्रियतेऽन्ते विचित्रेणाविचाल्यन्यायेपोद्बलितेन प्रतिवादेन । श्रीनिवासत्वात् स्वीकरणं सुकरमभूत् ॥

**शिथिलितभवभीतिः** । यद्यपि करणानामशैथिल्यमीप्सितम्, भवभीतेः शैथिल्यमपेक्ष्यते । शिथिलितत्वं भीतेर्नात्यन्तहानिः । प्रपत्तेः षष्ठदशकेऽनुष्ठास्यमानत्वात् । मोक्षप्रत्याशा जायते । विषयवास उपायान्वयप्रतिलम्भकः ॥

**श्रेयसे जायसे नः** । त्वद्दुर्लभो जायमानः श्रेयान् भवति । स्वश्रेयसे जायते सः । त्वं त्वसच्छ्रेयसे जायसे । भगवज्जन्मविषयश्रुतिप्रत्यभिज्ञापनं श्रेयसे जायसे इति भगवतोऽपि वैलक्षण्यव्यञ्जनाय ॥ ३४ ॥

**अवतरणविशेषैरात्मलीलापदेशै-**
**रवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ।**
**वृषभशिखरिनाथस्त्वन्निदेशेन नूनं**
**भजति शरणभाजां भाविनो जन्मभेदान् ॥ ३५ ॥**

भगवद्धृदये दयाजन्मोक्तम् । तां जायमानामनु भगवानवताररूपजन्म परिगृह्णाति । दयैवावतारे प्रधानं निमित्तम् । दयाजन्मकीर्तनेनावताररूपजन्मप्रसङ्गात् प्रासङ्गिकीह सङ्गतिरवतारकीर्तनस्य । मुख्या वा सङ्गतिः । अपराधस्य दण्डो जन्मभजनम् । अपराधप्रयुक्तभाविजन्मभेदान्भजति भगवान् । दण्ड्यस्य मोचने तत्प्राप्यजन्मभेदा भगवता दण्डयित्वा प्राप्यन्ते । दण्ड्यानुभाव्यजन्मानि तन्मोचनेऽध्यक्षेणानुभाव्यानीति निर्णयो निष्पन्न इव । तदर्थमेव तस्यावतारा इति चारूच्यते दयाप्रशंसायै ॥

**अवतरणविशेषैरात्मलीलापदेशैः** । अवतारा वस्तुतो दययैव कार्यन्ते । लीलाप्रयुक्ता अवतारा इत्युक्तिमात्रम् । सृष्टिप्रलयादेर्लीलात्ववर्णनमप्युक्तिमात्रम् । दयालीलाचेदस्मत्संमतमेव ॥

अवमतिमनुकम्पे मन्दचित्तेषु विन्दन्। 'अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः। निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्'। इति भगवतैवोक्तम्। 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' इति चोक्तम्। मूढा मन्दचित्ताः। अवज्ञा अवमतिः॥

वृषगिरिकटकसीमास्वधिदेवेन वृत्तम्। अनुवृत्तो गिरिशिखरवासस्वतिनीचैर्वर्तते। सर्वदेशा त्वदधीनता॥

शरणभाजाम्। शरणागतानाम्। गृहागतानां वा। गिरिवासप्रशंसाप्यत्रोद्देश्या॥

भाविनो जन्मभेदाननुभजति। तदपराधदण्डं स्वयमनुभवतीव। शरणं भजन्तेऽपराधिनः। तद्भारं भजत्ययम्। 'त्वं चेन्मनुष्यादिषु जायमानस्तत्कर्मपाशैः कृपयोपभुङ्क्षे। श्रीरङ्गनाथेत्कुशलेतराभ्यां भूयोऽभिभूयेमहि कस्य हेतोः॥' इति श्रीरङ्गराजस्तवश्लोकोऽत्र भाव्यः॥ २५॥

परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः।
ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या॥ २६॥

दयानिदेशवर्ती भगवानवसतिं विन्दतीत्युक्तम्। तावता भगवांश्च दयायामप्रीतिं भजते तद्वशवर्तित्वेन परिभवः स्यात् इति। प्रत्युत तत्प्रतिच्छन्देष्वपि बहुमतिं विस्तारयति। किमिदं चित्रमिति विस्मयते स्तोता। देवीनां दयाप्रतिच्छन्दत्ववर्णनेन दयाप्रशंसा क्रियते। दयासारा देव्यो दययैवात्मलाभं भजन्ते। दयैव तासां बिम्बम्। दयां विना तासां स्वरूपमेव न सिध्येत्; यथा बिम्बं विना प्रतिबिम्बस्वरूपं न सिध्येत्। एवं प्रतिच्छन्दत्ववर्णनोपपत्तिः। 'करुणामिव रूपिणीम्——' इति लक्ष्मीर्वर्णिता। क्षमैव क्षमा। क्षमां विना कथं क्षमासिद्धिः?॥

परहितमनुकम्पे भावयन्त्याम्। इदं दयास्वरूपम्। परहितभा-

वनं दयास्वरूपम् ॥

**स्थिरमनुपधि हार्दम्** । स्थिरं निरुपाधिकं प्रेम ॥

**श्रीनिवासो भवत्यां दधानः** । श्रीवल्लभोऽपि त्वद्वल्लभो भवन् ।

**ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या** । वल्लभतमासु प्रियास्वपि त्वत्प्रतिच्छन्दबुद्ध्या बहुमानः । त्वच्छन्दानुवर्तित्वात्तासु बहुमानः ॥ ३६ ॥

**वृषगिरिसविधेषु व्याजतो वासभाजां**
**दुरितकलुषितानां दूयमाना दये त्वम् ।**
**करणविलयकाले कांदिशीकस्मृतीनां**
**स्मरयसि बहुलीलं माधवं सावधाना ॥ ३७ ॥**

वृषगिरिकटकेषु वासो मास्तु । तन्निकटप्रदेशेषु वासोऽप्यलम् । तत्र प्रयोजनानुद्देशेन स्वयंप्रयोजनबुद्ध्या वासो मास्तु । केनापि निमित्तविशेषेण वासोऽप्यलम् । किं फलं वासस्य ? अन्तकाले दया श्रीनिवासमेनं स्मरयत्यन्तिमस्मृतिसम्पत्त्यै । 'दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कल्मषैर्वृतम् । तदन्तकाले संशुद्धिं याति नारायणालये' ॥

**वृषगिरिसविधेषु** । कटकेष्विति पूर्वोक्तस्थाने सविधेष्वित्युच्यते । यदि समीपप्रदेशानामीदृशो महिमा; किमु वाच्यं वृषगिरिवासप्रभावे ॥

**व्याजतः** । केनापि व्याजेन ॥

**वासभाजाम्** । वासभजनं भगवद्भजनकार्यकरामिव ॥

**दुरितकलुषितानाम्** । वासमात्रं दिव्यक्षेत्रे । न निर्मलास्ते । दुराचाराः सन्तु नाम । अपि चेत्सुदुराचारः; यदि वासं भजते साधुरेव स मन्तव्यः ॥

**दूयमाना दये त्वम्** । दूयमानत्वं दयायाः स्वभाव एव । अनुकम्पमाना, दूयमाना ॥

करणविलयकाले कांदिशीकस्मृतीनाम् । 'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्' इत्याद्यवस्थायां स्मृतयो दिशं दिशं पतन्ति । तादृशास्थिरस्मृतिमताम् ॥

स्मरयसि । 'अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' इत्यत्र स्मरामीत्यस्य णिचमन्तर्भाव्य स्मारयामीत्यर्थो वर्ण्यते । तं कः स्मरयति । दया त्वं तं स्मरयसि ॥

बहुलीलं माधवम् । किं सर्वज्ञोऽपि स्मारणीयः ? आम्, बहुलीलः सः । 'स्वामिपुष्करिणीतीरे रमया सह मोदते ।' सदा क्रीडन्नेवास्ते रमया । अतः स्वयं न स्मरेत् । स्मरयसीति ह्रस्वरूपमाध्याने । उत्कण्ठापूर्वकस्मरणमाध्यानम् । अतः स्मरयसीति ह्रस्वप्रयोगः । विधास्यमानं स्मरणं विचित्रहृदयहारिलीलाविशिष्टस्य भगवतः श्रीसनाथस्य ॥

सावधाना (त्वम्) । यद्यपि माधवो बहुक्रीडासक्तः, त्वं जागरूका तं स्मरयसि । वृषगिरिकटकसविधवासस्य फलमिदम् ॥ २७ ॥

**दिशि दिशि गतिविद्भिर्देशिकैर्नीयमाना**
**स्थिरचरमनुकम्पे स्त्यानलग्ना गुणैस्त्वम् ।**
**परिगतवृषशैलं पारमारोपयन्ती**
**भवजलधिगतानां पोतपात्री भविली ॥ ३८ ॥**

कांदिशीकत्वमुक्तं स्मृतीनाम् । तासां कान्दिशीकत्वं परिहृतं दयादयया । असंख्येष्वार्तेषु कं रक्षेयम्, कं रक्षेयमिति दिशि दिशि पतति दया कान्दिशीका । दया च नौरस्माकं संसारसागरपारप्रापणाय । नौश्च वाताहृता दिशि दिशि पतेत् । दया नौः । दया वाताहृता नौरितस्ततो धावेत् । दयायाः कान्दिशीकत्वं केन परिह्रियते ? देशिकैः परिह्रियते । तैर्नीयते दया । तदभिप्रायानुसारिणी दया । यत्र यत्र देशिककटाक्षाः पतन्ति ; तत्र तत्र दयाकटाक्षा निपतन्ति । दयानौकाकुहरनिहिताः पङ्गवो नाविकैर्देशिकैर्वृषगिरिरूपं संसारपारं नीयन्ते ।

'भगवन् करुणासिन्धो भवसिन्धोर्भवांस्तरिः ।
यमाश्रित्याञ्जसैव परं पारं गता बुधाः ॥'

इति श्रीशङ्कराचार्याः । दयासिन्धुर्भवसिन्धोस्तरिः । एकः सिन्धुः सिन्ध्वन्तरस्य तरिः ॥

**दिशि दिशि गतिविद्भिर्देशिकैर्नीयमाना** । समुद्रमध्ये दिक्परिज्ञानं कर्णधाराणां देशिकानाम् । भवसागरतारणं तैः कर्णधारैः । देशिकाभिप्रायलेया भगवद्दया ॥

**स्थिरचरं गुणैस्त्वानलङ्घ्या** । नावा स्थिरया, चरया च भाव्यम् । स्थैर्याभावे भिद्येत । चरत्वाभावे क उपयोगो नावा । यानार्थं तरणार्थं खलु नौः । दयाया वेगप्रसरणमप्रकम्प्यत्वं च । गुणैर्हढबद्धा नौः । आयसशृङ्खलाभिर्बद्ध्यते नौः ॥

**परिगतवृषशैलं पारमारोपयन्ती** । शोकस्य परं पारमिव स्थितं वृषशैलमारोप्यान्तेऽनुग्राह्याः ॥

**भवजलधिगतानां पोतपात्री त्वमेव** ।

'भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥'

इति मुकुन्दमालायां कुलशेखरीयत्वेनाभिमतायाम् । विष्णोः पोतत्वं दयाद्वारा । साक्षात् पोतत्वं दयायाः ॥ २८ ॥

**परिमितफलसंगात् प्राणिनः किम्पचाना**
**निगमविपणिमध्ये नित्यमुक्तानुषक्तम् ।**
**प्रसदनमनुकम्पे प्राप्तवत्या भवत्या**
**वृषगिरिहरिनीलं व्यञ्जितं निर्विशन्ति ॥ २९ ॥**

सर्वफलप्रदायिनी श्रीनिवासदया । आसेतुहिमाचलमखिलप्रार्थनापारिजातं श्रीवेङ्कटेश्वरं सेवन्ते जना वाञ्छिततत्तत्फलप्राप्तये । मोक्षार्थिनो विरलाः । प्रायेण काम्यफलार्थिनो जनाः । तेऽपि यदा भगव-

द्वाल्यनानान्ति, तेभ्यो दया नित्यमुक्तैरुपासितं भगवन्तं मुक्तिप्रदं व्यञ्जयति; तेषां मुमुक्षा जायते । कर्मदेशेनापि भगवद्धामगमने तद्दिव्यविग्रहसं-दर्शनप्रभावेण सत्त्वोदयः भूत्वा सङ्गं त्यक्त्वा मुमुक्षवो भवन्ति । इदमपि दयया साध्यते । एवं च श्रीवेङ्कटगिरिं गत्वा तत्र निवसने मोक्षपर्यन्त-श्रेयःप्राप्तिरिति तद्दिव्यधामप्रभावो वर्णितो भवति ॥

परिमितफलसङ्गात् प्राणिनः किम्पचानाः । 'प्रावण्यं प्राप्तिवर्गे' 'परीक्ष्य लोकान् कर्मचितान् ।' परितः सर्वतः सर्वप्रकारैर्मितं परिमितम् । मोक्षफलं सर्वप्रकारैरसङ्कुचितमपरिमितम् । 'अतोऽन्यदार्तम् ।' अल्पास्थिरफलसङ्गिनः किम्पचानाः । न बहुपाकिनस्ते । प्राणिन इति केवलं भस्त्रावच्छ्वसन्तीति व्यज्यते ।

'तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत'

इति श्रीशुकोक्तं स्मार्यते ॥

निगमविपणिमध्ये । निगमो वेद एव पण्यवीथी । निगमशब्दो वेदार्थकः, पण्यवीथ्यर्थकः ; वणिक्समूहार्थकश्च । अत्र वेदस्य विपणित्वरूपणे निगमशब्दश्लेषोऽतिसरसः । सर्वेऽधिकारिणस्तत्तदभिमतं फलं शास्त्रचोदितानुष्ठानेन लभन्ते । भ्रातृव्यहननमपि लभ्यते श्येनाद्यभिचारकर्मणा ॥

नित्यमुक्तानुषक्तं वृषगिरिहरिनीलम् । नैगमा वणिज आपणे उत्कृष्टरत्नादिकं प्रदर्शयेयुर्विक्रयाय । नीलरत्नभूतभगवद्विग्रहः प्रदर्श्यते दयया । नीलो हरिर्हरिनीलम् । इन्द्रनीलम् । नित्यैर्मुक्तैश्चानुषक्तमिदं हरिनीलम् । नित्यं मुक्तैरनुषक्तम् ।

'तत्राद्यैः सपदि मनुजैः स्वर्गिभिश्चावतीर्णैः'

इति हंससन्देशोक्तरीत्या परमपदस्था नित्यमुक्ता अवतरन्ति सेवार्थम् । मनुजा आरोहन्ति । मनुजेभ्यो व्यज्यते दयया ॥

प्रसदनमनुकम्पे प्राप्तसत्त्वा भवत्या । यदा परिमितफलार्थं

मनुजास्तत्रायान्ति ; फलान्तरार्थमपि भगवदुपसदनेन प्रसन्ना दयोपसन्नस्य भगवतस्ततोऽप्युत्कृष्टमोक्षफलप्रदत्वं व्यञ्जयति । नित्यमुक्तानुषक्तभगवत्प्रदर्शनेन यूयमपि हरिर्नीलिनानेनानुषक्ता मुक्ता भवेत, यद्यपरिमितफलमिच्छेतेति वदतीव ॥

**व्यञ्जितम्** । आपणे रत्नादिप्रसारणवत् । रत्नादिविक्रेयवस्तुवद्दयाविक्रेयं भगवद्रत्नं प्रदर्श्यते । दयां प्रपन्नैः सुलभं क्रीतो भवति भगवान् । भक्तिक्रीतो जनार्दनः । प्रपत्तिर्भक्तिः ॥

**निर्विशन्ति** । सम्यगनुभवन्ति ॥ ३९ ॥

**त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे**
**जगति गतिमिहान्यां देवि सम्मन्यते यः ।**
**स खलु विबुधसिन्धौ सन्निकर्षे वहन्त्यां**
**शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ ४० ॥**

निर्विशन्तीत्युक्तम् । निर्झरा दयाप्रवाहाः सन्तीत्युक्तम् । गिरिवासप्रशंसारूपदशकमुपसंहरन्नुत्तरदशकेऽन्यवैमुख्यरूपैकान्त्यं वर्णयिष्यन् दयामात्रस्य वस्तुत्वमितरासां गतीनां मृगतृष्णिकात्वं च ब्रवीति । अत्र
'साक्षात् प्रियामुपगतामपहाय पूर्वं चित्रार्पितामहमिमां बहुमन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य जातःसखे प्रणयवान् मृगतृष्णिकायाम्'
इति शाकुन्तलश्लोक आचार्यबुद्धिस्थ इति स्पष्टमिव । प्रतिभासमानत्वमात्रेण न सत्त्वं प्रमीयेतेति प्रतिपादनावसरे उक्तं भामत्याम्—'तथा सति मरुषु मरीचिचयमुच्चावचमुच्चलत्तुङ्गतरङ्गभङ्गमालयमभ्यर्णमवतीर्णा मन्दाकिनीत्यभिसन्धाय प्रवृत्तस्तत्तोयमापीयापि पिपासामुपशमयेत्' इति तदपि बुद्धिस्थमिव । यद्यपि श्रीनिवासव्यतिरिक्तस्य चेतनाचेतनप्रपञ्चस्य मिथ्यात्वं नाभ्युपगच्छामः तद्दयाव्यतिरिक्तगत्यन्तरस्य मृगतृष्णिकात्वरूपप्रातिभासिकत्वमेव रोचयामहे । सर्वाभिर्देवताभिर्दीयमानं फलं श्रीनिवासदययैव लभ्यते। 'यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः' इति मनुष्याणां दयाऽपि श्रीनि-

वासदयामनुवर्तते । अतः श्रीनिवासदयायाः स्वतः सत्यत्वम् । इतरदयानां तत्प्रतिबिम्बत्वेन सत्त्वम् । तामन्तरा प्रतिभासिकत्वमेव ॥

**त्वयिबहुमतिहीनः श्रीनिवासानुकम्पे**। त्वयि बहुमत्यभावे हानत्वं स्यात् । वहुमतिहीनः । ल्यब्लोपे पञ्चमी ॥

**जगति गतिमिहान्यां देवि संमन्यते यः**। यो गत्यन्तरमभिमनुते ॥

**स खलु विबुधसिन्धौ सन्निकर्षे वहन्त्याम्**। खल्विति प्रसिद्धिः । देवीति संबोधनं सुरसिन्धुत्वरूपणे उपकरोति । स्रोतोवहां पथि निकामजलामिति नदीमात्रत्वमुक्तं शाकुन्तलश्लोके । अत्र मन्दाकिनीत्वमुच्यते दयायाः । एतच्च भामत्युल्लेखमन्तर्भावयतीव । 'माधवदयामन्दाकिनी' 'दिव्यापगाव्यापकाः' 'कारुण्यगङ्गाप्लावितमद्विधान्' इति गङ्गात्वोल्लेखो भूयः क्रियते आचार्यैर्दयां प्रति । उभयोः श्रीनिवासपादोद्भवत्वम् 'वृषगिरिनाथपादपरिरम्भवती भवती' इति वक्ष्यते ॥

**शमयति मृगतृष्णावीचिकाभिः पिपासाम्**। आयासमात्रं भवेन्न फलप्राप्तिः । अयं श्लोक उत्तरं दशकमवतारयति ॥ ४० ॥

**आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा**
**काले दृष्ट्वा कमलवसतेरप्यकिंचित्कराणि ।**
**पद्माकान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये**
**साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥ ४१ ॥**

श्रीकुलशेखरसूक्तयस्तत्र तत्र स्मरणपथमायाताः पूर्वदशके । स च मुनिर्वेङ्कटगिरौ जन्म तीव्रमाचकाङ्क्ष द्राविडगाथादशकेन । वासः प्रार्थितो वृषगिरौ पूर्वदशके । अत्र जन्म प्रार्थ्यते तत्र । क्रमेण मनोरथो वर्धतेऽभिवर्धते । भिक्षुपादप्रसरणन्यायोऽत्र सर्तव्यः । अनन्तरदशके प्रपत्तिमनुष्ठास्यंस्तां वर्णयिष्यन्वृत्तदशकान्ते वर्णितं श्रीनिवासदयोत्कर्षम्; इतरनिकर्षं चोपपादयत्यत्र । श्रीनिवासदयायाः सुरस्रवन्तीत्वेन, दीर्घिकात्वेन

वा; निर्झरत्वेन वा पिपासाशमयितृत्वं वर्ण्यतेऽत्र । गिरिसञ्चरणे गातुं युक्तं मन्दाक्रान्तावृत्तम् । रामगिरिकटकेषु सञ्चरता यक्षेण मेघं प्रति सन्देशोऽगीयत मन्दाक्रान्तावृत्तेन । मन्दमेव संचर्यते गिरिप्रदेशे ॥

**कमलवसतेराज्ञां ख्याति** धनस्य सुखस्य धर्मस्याधिराज्यस्यैहिकं वा । कमलवसतेः श्रीनिवासनाभिजन्मनोऽपीति भावः । 'त्वन्नाभिजातादरविन्दनेत्रात्' इति श्रीशुकोक्तस्मरणम् ॥

**कालेऽकिञ्चित्कराणि दृष्ट्वा** । पुराऽत्कालं सर्वकरमिवाभूत् । इदानीमकिंचित्करमिति दृश्यते ॥

प्रेक्ष्य । परीक्ष्य । चिरकालं जाज्वल्यमानान्यन्तेऽकिंचित्कराणि भवन्ति । अतो वरं प्रथममेव तेषां निःसारत्वग्रहणम् ॥

**पद्माकान्तं प्रणिहितवती पालनेऽनन्यसाध्ये** । त्वन्नियोगकरः श्रियः पतिः । 'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' इति वचनज्ञापनं पालनशब्देन । 'अनन्यसाध्ये स्वाभीष्टे' इति वचनस्य स्मारणमनन्यसाध्य इति । प्रणिहितवती प्रणिधानयुक्तं कृतवती । प्रणिधानं च तपः तप आलोचने । 'स तपोतप्यत । स तपस्तप्त्वेदं सर्वमसृजत' इति तपःशब्दोक्तप्रणिधानमभिप्रेतम् । सृष्टिरुपलक्षणं पालनादेः ॥

**साराभिज्ञा जगति** । सारानिष्कर्षो भवत्यत्र । दया च सारतमा जगति ॥

**जगति कृतिनः** । कृत्स्नजगति त एव कृतिनः । कृतिनः कार्पण्यैकान्तिनः ॥

**संश्रयन्ते दये त्वाम्** । 'सारज्ञा दयां संश्रयन्ते' इत्युक्त्या दयायाः सारत्वं गम्यते । गोप्तृत्ववरणसूचनमिव । गोप्त्री च दया ॥ ४१ ॥

**प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं**
**जन्माकाङ्क्षन्वृषगिरिवने जग्मुषां तस्थुषां वा ।**
**आशासानाः कतिचन विभो त्वत्परिष्वङ्गधन्यै-**
**रङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः ॥ ४२ ॥**

श्रीकुलशेखरमनोरथवदत्र जन्ममनोरथः प्रदर्श्यते । कतिचनेति श्रीकुलशेखरादयो गृह्यन्ते । स्थावरत्वं पापयोनि । तस्थुषां वेति जङ्गमादपि न्यूनत्वप्रदर्शनं स्थावरस्य । कदाचिच्छ्रीनिवासस्य दयापरिष्वक्तकटाक्षपतनं लभ्येत यद्यहं स्थावरत्वेनापि तत्र जन्म लभेय ।

**प्राजापत्यप्रभृति विभवम्** । 'पतिं विश्वस्य' इत्युक्तात् श्रियः पत्युर्भेदः प्रजापतिरिति ।

'पत्युः प्रजानामैश्वर्यं पशूनां वा न कामये ।
अहं कदम्बो भूयासं कुन्दो वा यमुनातटे ॥'

इत्यस्य प्रत्यभिज्ञापनं प्राजापत्यप्रभृतिविभवमिति ; तस्थुषां जन्माकांक्षन्निति च । उभयत्रानुभवतौल्यं स्पष्टम् । विश्वपतिः, प्रजापतिः ; पशुपतिरिति त्रयः पतयः । प्रभृतिशब्देन मोक्षविभवस्यापि ग्रहणं स्यात् ॥

**प्रेक्ष्य** । 'परीक्ष्य लोकान् कर्मचितान् ।' निर्वेदे प्राप्ते मुमुक्षागुर्वभिजिगमिषादिकं भवेत् ।

**पर्यायदुःखम्** । दुःखपर्यायम् । नाममात्रं सुखमिति । दुःखपरम्परेति वा ॥

**जन्माकांक्षन् वृषगिरिवने** । वृन्दावने गुल्मलतादिभवनमनोरथवत् । वृन्दावनं न गिरिवनम् ॥

**जग्मुषां तस्थुषां वा** । 'हा जन्म तासु सिकतासु मया न लब्धम्' इति सिकतात्वेनापि जिजनिषा श्रीवत्साङ्कमिश्राणाम् । वेति स्वेदजादिजन्माप्यलमिति द्योत्यते । 'भवनेष्वस्त्वपि कीटजन्म मे ॥'

**आशासानाः** । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।' किं प्रयोजनमुद्दिश्य दुःसहं कष्टं प्रार्थ्यते ? परमनिश्रेयसप्रेप्सया ॥

**कतिचन** । श्रीकुलशेखरादयः ॥

**विभोः** । प्रभुर्गिरिकटकेषु सर्वत्र सञ्चरतीति व्यज्यते विभुशब्देन । विष्वक्सञ्चरणात् स्थावरेष्वपि तत्कटाक्षपातसम्भवः ॥

न्तदारण्वङ्गधन्यैः । दयया सरभसं गाढमालिङ्गचन्ते भगवद्दृष्टयः प्रजानुग्रहाय । 'हर्षीणां नु स्वावहं भर्तारं परिषस्वजे' । दयया परिरब्धा भागवद्दृष्टिदोषं नावेक्षते । दुर्लभदयितालिङ्गनग्रहेण धन्यता कटाक्षाणाम् । धनं लब्धो दृष्टिः ॥

अङ्गीकारम् । स्वजनत्वेनाभ्युपगमम् । अत्रैव सुखमास्स्वेत्यङ्गीकारः । क्षणमात्राङ्गीकारो वा ॥

क्षणमपि । यावदायुषं स्थावरत्वेनावस्थितिः प्रार्थ्यते एकक्षणकटाक्षलाभाय ॥

दये हार्दतुङ्गैरपाङ्गैः । वृषगिरिपतेरुन्नतिः सहजा । तस्य तथोत्तुङ्गत्वं तुङ्गप्रेम्णेति व्यज्यते । हार्दमिति प्रेम । प्रेमोन्नतैः कटाक्षैः । उन्नतस्य तस्य प्रेम्णा समुन्नतिः ॥ ४२ ॥

नाभीपद्मस्फुरणसुभगा नव्यनीलोत्पलाभा
क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम् ।
शीता नित्यं प्रसदनवती श्रद्धयालावगाह्या
दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ ४३ ॥

सन्निकर्षे तस्य स्रोतः स्रोतोवहमस्ति, येन पिपासा शाम्येदित्युक्तं पूर्वदशकान्ते 'ग्रीष्मे शीतमिव ह्रदम्' इति प्रमाणमनुसृत्य । भगवद्विग्रहस्य मानसावगाहयोग्यशीतदीर्घिकात्वं निरूप्यते । सा च दयाविहारदीर्घिका । दयायाः क्रीडापर्वतो वेङ्कटशैलः । दयिताक्रीडादीर्घिकाभूतो भगवद्विग्रहः स्वस्मिन्दयिताक्रीडाशैलं विवृणुत इति वैचित्र्यनिरूपणम् । विग्रहः स्वकान्त्यतिशयेन दीर्घिकावद्भासते । सा च निरतिशयबृहती । तदेकदेशे वेङ्कटगिरिः प्लवत इवेत्यनुभवः ॥

नाभीपद्मस्फुरणसुभगा । स्फुरति दीर्घिका । भगवद्विग्रहकान्तिः । तन्मध्येऽतिमनोहरं नाभीपद्मम् । तेनातिकमनीया दीर्घिका ॥

नव्यनीलोत्पलाभा । नीलस्रोतःपूर्णेव दीर्घिका । नात्रोत्पलापेक्षा ।

दीर्घिकैवाभिनवनीलोत्पलकान्तिर्भवति ॥

क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम्। तव क्रीडार्थं निर्मितो वेङ्कटशैलः। पापनिर्हरणं तव क्रीडाकृत्यम्। तदर्थमेव वेङ्कटगिरिरवतीर्णः। तव क्रीडाशैलं विवृणुते इयं दीर्घिका। 'यमेवैष वृणुते'। त्वत्क्रीडाशैलस्य परमपुरुषवरणीयत्वम् ॥

शीता। शीतमिव ह्रदमिति प्रमाणस्मारणम् ॥

नित्यं प्रसदनवती। स्रोतजः सहजं कादाचित्ककालुष्यम्। तस्यात्यन्ताप्रसक्तिरत्र। नित्यं प्रसन्ना। मतुपाऽतिशयद्योतनम्। नित्ययोगे वा मतुप्। आदरातिशयात्प्रत्ययोक्तस्य नित्यत्वस्य पृथक्कीर्तनम् ॥

श्रद्धानावगाह्या। श्रद्धामात्रमधिकारः स्नाने। महाविश्वासो द्योत्यते ॥

दिव्या काचिज्जयति महती दीर्घिका तावकीना। 'भावनादीर्घिकायाम्' इति भगवद्दिव्यमङ्गलविषयास्मद्भावनाया दीर्घिकात्ववर्णनमन्यत्र। 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी।' अस्मद्भावनाया दीर्घिकात्वे भगवतोऽपि दीर्घिकीभवनं न्याय्यम्। दयाशतके दयाया एव जयतिपाठो न्याय्यः। अत उच्यते तावकीनेति। तावकीनजयस्तव जय एव। गिरिविषयवासे एतद्दीर्घिकाशीतावगाहसंभवः श्रद्धामात्रेण। तत्र जातानां स्वदेशीयदीर्घिकायां श्रद्धाभिमानादिकं भूयः स्यात् ॥ ४३ ॥

यस्मिन् दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं
सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम्।
त्वत्स्वीकारात् तमिह कृतिनः सूरिवृन्दानुभाव्यं
नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ ४४ ॥

भगवद्विग्रहस्य शीतप्रसन्नदीर्घिकात्वमुक्तम्। 'एष ब्रह्म प्रविष्टोऽसि' इति वचनेन ब्रह्मस्वरूपावगाहः खल्वभिमतः। स्वरूपावगाहोऽपि दयया सम्पाद्यत इत्युच्यते। शुभाश्रयविग्रहानुभवद्वारा स्वरूपानुभवो

लभ्यते । अत्रानन्दसिन्धुत्वं, निधित्वमित्युभयं निरूप्यते । आनन्दमयप्रतिपादिका तैत्तिरीयश्रुतिस्तस्य निधित्वं सूचयति 'निहितं गुहायाम्' इति। निगूढतया स्थापितो निधिर्निहितः । दहरगुहास्थत्वेन हिरण्यनिधित्वं स्पष्टं वर्ण्यते छन्दोगश्रुत्या ॥

**यस्मिन् दृष्टे** । 'तस्मिन् दृष्टे परावरे' इति सप्तम्यन्तघटितश्रुतिप्रत्यभिज्ञापनम् । तस्मिन्नित्यस्य स्थाने यस्मिन्निति ॥

**तदितरसुखैर्गम्यते गोष्पदत्वम्** । फलान्तरस्य न्यूनत्ववर्णनं तस्य सुखत्वमभ्युपगम्य । अभ्युपगमवादोऽयम् । गोष्पदत्वमितरेषाम् । अस्य तु सिन्धुत्वम् । 'एतस्यैवानन्दस्य मात्रामुपजीवन्ति' इति श्रुतिगतमात्राशब्दाविवरणं गोष्पदत्वमिति । तस्मिन् दृष्टे इतरसुखैर्गोष्पदत्वं प्राप्यते । तत्पूर्वं दुःखत्वमेव तेषां सुखवन्मतानाम् । गम्यत इति ज्ञायते, प्राप्यत इत्युभयार्थकत्वम् । न्यायसापेक्षत्वरूपविलम्बः स्यात् बुद्ध्यर्थकत्वे । प्राप्तिरूपगत्यर्थः सन्निकृष्टतरः । ब्रह्मदर्शने प्रकृतेः सुखत्वाविर्भावः । ब्रह्मदर्शनात् पूर्वं दुःखरूपता तस्याः ॥

**सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम्** । श्रुतिस्थानन्तपदस्य विवरणं त्रिभिरवधिभिर्मुक्तमिति । निरतिशयबृहत्त्वरूपब्रह्मशब्दार्थश्चोक्तः ॥

**त्वत्स्वीकारात् तमिह कृतिनः** । त्वया स्वजनीकृतत्वात् । 'अमृत इह भवति' इति श्रुतिसूचनमिहेति ॥

**सूरिबृन्दानुभाव्यम्** । बहुभिः सहानुभवे भोगाधिक्यम् ॥

**नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ** । अन्यत्राञ्जनेन निधिदर्शनम् । अत्राञ्जने निधिदर्शनम् । पुराणोऽयं निधिः सदाऽनुभूयमानोऽपि प्रतिक्षणं नव्यवद्भवति । नित्यापूर्वोऽयम् । 'भवति नवो नवोऽयमक्ष्णोः ।' पूर्वश्लोके विग्रहैकदेशे गिरेरवस्थाननिरूपणम् । अत्र गिरौ स्वरूपानुभवलाभप्रदर्शनम् ॥ ४४ ॥

**सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः**
**काले काले घनरसवती कालिकेवानुकम्पे ।**
**व्यक्तोन्मेषा मृगपतिगिरौ विश्वमाप्याययन्ती**
**शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ ४९ ॥**

दयाया नदीत्वम्, सिन्धुत्वम् ; वृक्षत्वं च वर्णितम् । अत्र गिरिशिखरस्थमेघपंक्तित्वेन रूपणं क्रियते । मन्दाक्रान्तावृत्तं वृतं कविसार्वभौमेन मेघसन्देशे । गिरिवासे श्यामेघो दृष्टिपथं गच्छेत् । अयं दयामेघो महतः श्रीनिवासाम्बुराशेः सारं निपीय विश्वमाप्याययति स्ववर्षैः । पर्जन्यस्योच्चनीचेषु साध्वसाधुषु समत्वं प्रसिद्धम् । सर्वसमत्वं दयास्वभावः । अत उपपन्नं मेघरूपणम् ॥

**सारं लब्ध्वा कमपि** । 'रसं ह्येवायं लब्ध्वा' इतिवत् । आनन्दसिन्धुः खलु प्रस्तुतः पूर्वश्लोके । मुहुर्मुहुः सारशब्दस्य प्रयोगः । 'कपोतोपाख्यानश्लोकानुदाहृत्य वेदोपबृंहणतया प्रवृत्ते श्रीमद्रामायणे 'वेदसारभूतोऽयमर्थश्चोपबृंहितो भवति' इति सारत्वमुक्तं कपोतप्रदर्शितशरणागतिधर्मस्य निक्षेपरक्षायाम् ॥

**महतः श्रीनिवासाम्बुराशेः** । महत इत्यनन्तत्वम् ॥

**काले काले घनरसवती** । आनन्दघनस्य रसो घनरसः । घनरसवान् घन इति वैचित्र्यप्रदर्शनमभिप्रेतम् । तत्तत्प्राणिसुकृतपरिपाककाले ॥

**कालिकेवानुकम्पे** । कालमेघमालेव । दयाकालोद्भवा कालिका ॥

**व्यक्तोन्मेषा मृगपतिगिरौ** । गिरिमिव मेघः प्रायेणाश्रयेत् । मेघो दयामूर्तिः ॥

**विश्वमाप्याययन्ती** । अनन्तादम्बुधेः सारलाभादतिबृहन्नयं मेघः । अतो विश्वमाप्याययितुं प्रभवति । विश्वमिति साध्वसाधुसर्वलोकम् ।

**शीलोपज्ञं शीतलं सद्गुणौघं** । कल्याणगुणान्वर्षति । न दयां विना कल्याणगुणाविष्कारः । तां विना शक्तिबलादयो दोषा एव भवेयुः ।

दयाप्रभावाभावे कदाचिन्निर्गुणत्वावभासो भवेत् । शीलोपज्ञमिति सौशील्यस्य प्रथमगणनम् । तस्य च प्राथम्यमुक्तमाचार्यैर्गुणशब्दव्याख्याने स्तोत्रभाष्ये ॥

**क्षरति भवती** । मेधीभूयाक्षरं पुरुषम्; तद्गुणांश्च त्वं क्षरसि । अक्षरस्यापि क्षरणं त्वन्महिम्ना ॥ ४५ ॥

**भीमे नित्यं भवजलनिधौ मज्जतां मानवाना-**
**मालम्बार्थं वृषगिरिपतिस्त्वन्निदेशात् प्रयुङ्क्ते ।**
**प्रज्ञासारं प्रकृतिमहता मूलभागेन जुष्टं**
**शाखाभेदैः सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥ ४६ ॥**

श्रद्दधानावगाह्येत्युक्तम् । श्रद्धा चास्तिक्यबुद्धिः शास्त्रश्रद्धा । तया च सात्त्विक्या भाव्यम् । 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति भगवान् । आनन्दसारभूतभगवत्स्वरूपविग्रहादिकमुक्तम् । प्रज्ञासार उच्यते । आनन्दसागरावगाह उक्तः । भवसागरादुद्धरणमुच्यते । 'मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ।' शास्त्रप्रवर्तकत्वं करुणाकार्यम् । शरणागतिः प्रस्तोष्यते । परदेवतापारमार्थ्यज्ञानमपेक्षितम् । तन्निष्पत्तिर्देवतापारमार्थ्यवेदिपराशरादिसत्त्वोत्तरग्रन्थैः ॥

**भीमे नित्यं भवजलनिधौ मज्जतां मानवानाम्** । यद्यपि भवसागरो भीमः; तत्र नित्यं मज्जन्ति मूढाः । मनोजाता अप्येवं मूढा भवन्तीति द्योत्यते मानवा इति ॥

**आलम्बार्थम्** । हस्तालम्बो दीयते मज्जताम् ॥

**वृषगिरिपतिस्त्वन्निदेशात् प्रयुङ्क्ते** । 'मानं प्रदीपमिव कारुणिको ददाति ।' शास्त्रदानं करुणया । दयापरवशः सच्छास्त्रं प्रवर्तयति ॥

**प्रकृतिमहता मूलभागेन जुष्टम्** । मूलभूतं शास्त्रं वेदाः । ते च महान्तोऽनन्ताः । पाणेः शाखा अङ्गुलयः शाखाभेदाः । शाखाभेदैरङ्गुलिभिः । मूलभाग इति मूलवेदत्वेन प्रसिद्धैकायनशाखाग्रहणमपि स्यात् । अनन्तरश्लोके स्वशास्त्रमिति पञ्चरात्रशास्त्रमुच्यते । अत्र तन्मूलभूतश्रु-

तिग्रहणम् ॥

अन्वयः । निर्दोषव्चनागमस्य ॥ ४६ ॥

विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानां
पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् ।
लीलादक्षां त्वदनवसरे लालयन्विप्रलिप्सां
मायाशास्त्राण्यपि दमयितुं त्वत्प्रपन्नप्रतीपान् ॥ ४७ ॥

शास्त्रेणैव श्रीनिवासभिन्नानामपि दया स्तूयते । यदि शास्त्रं प्रमाणं कथं तेषां दयाया मृगतृष्णिकात्वमिति पृष्टे—उच्यते । दयाया अनवसरे लीलाप्रभावेन विप्रलिप्सया मायाशास्त्राणि प्रवर्तितानि । नैवासुरप्रकृतयः प्रभवन्ति तत्त्वं बोद्धुम् ॥

विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानाम् ।

'मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥'

इति कालिदासीयश्लोकस्य स्मारणम् । सत्सम्प्रदायसिद्धाः सत्त्वनिष्ठाः सदाचार्या विद्वांसः ॥

पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् । स्वशास्त्रं सात्त्वतम् । दयादर्पणरूपं तत् । भगवद्दया तत्र स्फटिक इव व्यक्तीभवति । सुलभतमाकिञ्चनोपायस्य प्रकटनात् सात्त्वतशास्त्रप्रणयने स्वस्मै दर्पणप्रणयन इव हर्षो दयायाः । श्रीनिवासार्चाविग्रहे श्रद्धा, रुचिश्च प्रतिपिपादयिषिता । सा च सात्त्वतशास्त्रात् सिद्ध्येत् । अतस्तत्प्रतिपादनमत्र । 'श्रुतिशिरःशेखरेण स्वतः सर्वज्ञेन भगवता निखिलजगदुद्धरणाय प्रणीते विप्रकीर्णानन्तनिगमसंग्रहात्मके पञ्चरात्रशास्त्रे' इति निक्षेपरक्षायां । महाविश्वास उपचीयते॥

त्वदनवसरे । त्वयि सन्निहितायां न विप्रलिप्सासम्भवः । लीला कर्त्री विप्रलिप्सा । त्वदनवसरे लीलाया अवकाशः । लीलासखी विप्रलिप्सा लाल्यते तदा ॥

**मायाशास्त्राण्यपि (प्रणयति)** । मायारूपप्रतिबन्धवर्धकानि शास्त्राणि । अयथार्थज्ञानजनकानि । ते स्वशास्त्रमिति स्वपदेन दयायाः स्वभूतमिति वा स्यात् । तथा च दयाशास्त्रं भवति सात्त्वतम् । मायाशास्त्रं विप्रलिप्साप्रयुक्तम् । अपिशब्देन तद्वचने स्वाभाविकेच्छाभावो द्योत्यते । प्राणिकर्मप्रयुक्ता तद्विषयप्रवृत्तिः ॥

**त्वत्प्रपन्नप्रतीपान् दमयितुम्** । किं तत्प्राणिकर्म ? येन दयापरवशस्य पद्माकान्तस्यापि विप्रलब्धुमिच्छा जायते । दयाप्रपन्नविषयापराधोऽतिक्रूरदण्डमर्हति । त्वत्प्रतीपा इत्येव ते प्रतार्यन्ते । अतो न त्वद्वाल्लभ्यहानिः । एवं लीलापि तवैव किङ्करी भवति ॥ ४७ ॥

**दैवात् प्राप्ते वृषगिरितटं देहिनि त्वन्निदानात्**
**स्वामिन् पाहीत्यवशवचने विन्दति स्वापमन्त्यम् ।**
**देवः श्रीमान् दिशति करुणे दृष्टिमिच्छंस्त्वदीया-**
**मुद्धालेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥ ४८ ॥**

वृषगिरिकटकेऽत्क्रमिष्यतां जनानां भगवदङ्गीकाररूपश्रेयः सुलभम् । दयया तद्देशगमनम् ; तत्रान्तिमस्वापलाभश्च । सकृत्कर्तव्यक्षणिकव्यापारेण मोक्षसाम्राज्यफलसम्भवं प्रदिदर्शयिषुः ‘अवशेनापि यन्नाम्नि’ ‘आक्रुश्य पुत्रमघवान् यदजामिळोऽपि नारायणेति म्रियमाण अवाप मुक्तिम्’ इत्यादिप्रमाणमनुरुद्धय यदि स्वामिन् पाहीत्यनिच्छन्नप्युक्त्वा म्रियेत सदा सावधाना दया तच्छ्रुत्वा वाल्लभ्येन स्वामिनमोमित्यङ्गीकारं वाचयति । ओमित्युक्तौर्निःश्रेयसं भवति ॥

**त्वन्निदानात्** । त्वयैव कार्यते वृषगिरिगमनम्, तत्रोत्क्रमणम्; तद्दशायामवशेनापि स्वामिन् पाहीति वचनं च ॥

**वृषगिरितटं दैवात् प्राप्ते देहिनि** । भाग्यवशात् प्राप्ते । देहिनीति सर्वाधिकारत्वम् ॥

**स्वामिन् पाहीत्यवशवचने विन्दति स्वापमन्त्यम्** । दीर्घनि-

द्रावशं प्राप्नुवति । अवशवचन इत्यवशेनापि यन्नाम्नीति वचनस्य स्मारणम्॥

देवः श्रीमान् । श्रीविशिष्टः ॥

करुणे त्वदीयां दृष्टिमिच्छन् । त्वत्कटाक्षम् , त्वद्बहुमतिम् ; त्वदनुरागं चेच्छन् ॥

उद्धातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् । उद्धात आरम्भः । वेदानामारम्भभूतः प्रणव ओंकारः । ओमित्युत्तरेणाभिमुख्यं ददाति । आर्तायाभिमुख्यदाने दयाभिमुख्यं भवति भगवतः । आरम्भेणोत्तरेणेति चारु विरोधस्फोरणम् । सर्वस्मात्पूर्वं उत्तरो भवति । 'उद्धातः प्रणवो यासाम्—' इति कुमारसंभवे । 'श्रुतिपरिषदामुत्तरेण' इति श्रुतोपनिषत्कगतिभूतोत्तरपथस्यापि ग्रहणं स्यात् । 'श्रुतोपनिषत्कगत्यभिधानाच्च ।' तेनोत्तरेण पथातिवाह्याभिमुख्यं दिशति । ओंकारालम्बनेनोत्तरपथेन मोक्षप्राप्तिः श्रूयते । 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति शैव्यप्रश्ने ॥ ४८ ॥

श्रेयःसूतिं सकृदपि दयां संमतां यः सखीं ते
शीतोदारामलभत जनः श्रीनिवासस्य दृष्टिम् ।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्
बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥ ४९ ॥

दयायाः प्रियसखी श्रीनिवासदृष्टिः । सा दृढं परिष्वज्यते दयया । वृषगिरिगमने श्रीनिवासकरुणापूर्णदृष्टिविषयत्वं लभ्येत । दयायाः सखीभूतदृष्टेः सकृन्निपतनमात्रेण देवपूज्यत्वलाभे किमर्थं देवादीनां दयाया अन्वेषणम् । सकृदिति करिष्यमाणप्रपत्तेः सकृत्त्वेऽपि तस्या निःश्रेयसम्प्रदानसामर्थ्यसूचनम् ॥

श्रेयःसूतिं ते संमतां सखीम् । तव सख्याः सर्वफलप्रदत्वं सकृत्प्रसरमात्रेण ॥

शीतोदाराम् । दातुः पूर्णचन्द्रवत्सौम्यता सूच्यते शीतेति । स्नपयति स्वविषयम् ॥

श्रीनिवासस्य दृष्टिम् । मिथुनस्य दृष्टिम् ॥

यः सकृदप्यलभत । तत्र हेतुः स्याद्वा मा वा दृष्टिर्लब्धा चेदलम् ॥

देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन् । 'देवर्षि........ नायमृणी च राजन् । सर्वात्मना यो नारायणं लोकगुरुं प्रपन्नः' इति प्रमाणस्य स्मारणम् । अनुपदमेव कारिष्यते प्रपत्तिः । 'यज्ञेन देवेभ्यः' इति देवर्णम् । पात्रचयनान्तमृणानुवृत्तिरिति कर्मठा मीमांसकाः । तन्मतव्यावृत्त्यर्थमुक्तं देहवत्त्वेऽपीति ॥

बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः । 'तस्मै ह देवा बलिमावहन्ति' इति देवदत्तैर्बलिभिः पूर्यते । अनघैरिति स्वयं प्रयोजनतयेत्यर्थः। 'तान्येव भावोपहतानि कल्कः ।' देवैरानृण्यमीप्स्यत इव ॥ ४९ ॥

दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा
क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ।
विश्वाचार्या विधिशिवमुखाः स्वाधिकारोपरुद्धा
मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥ ५० ॥

दयाप्रियसखी श्रीनिवासदृष्टिर्वर्णिता । दयादिव्यदृष्टिर्वर्ण्यते । दयात्मका देशिकाः । तेषां दृष्टिर्दयादृष्टिः । परमपदादपि प्राप्यत्वमधिकं श्रीवेङ्कटाचलस्य । 'पापिष्ठः क्षत्रबन्धुश्च' इत्याचार्यवत्ताप्रभावोऽनुसन्धीयते प्रपदनसमये । उत्कृष्टेषु सर्वज्ञेषु विधिशिवादिषु न तावद्वात्सल्यं , यावज्जडे मयि, तुल्येऽपि सर्वेषां पुत्रत्वे । शक्तपुत्रापेक्षया जडपुत्रपक्षपातित्वं मातृस्वभावः । शरणागतिदशकमारप्स्यते । तदर्थं मातृवद्वत्सलतास्वभावोऽनुसन्धीयते । मातेत्युक्त्या दया वर्ण्यते ॥

करुणे येषु सद्देशिकात्मा दिव्यापाङ्गं दिशसि । सद्देशिकात्मेति विश्वाचार्येभ्यो वैलक्षण्यम् । श्रीनिवासदयैव सदाचार्यमूर्तिं परिगृह्य संचरति । सदाचार्याणामपाङ्गा दिव्याः; न मानुषाः । दिव्यदयात्मकत्वात्तेषाम् । दिशसीत्युपदेशस्याप्यनपेक्षा व्यज्यते । देशिकदृष्टिपात एवालम् ।

स एवोपदेशकार्यकारी । 'गुरुप्रसदनप्रकुरद्गुणगारिम्णि यन्मानसे' इति ह्युक्तम् ॥

ते । अनिर्वाच्यपापवन्तः पापिष्ठाः क्षत्रबन्ध्वादयः ॥

**क्षत्रबन्ध्वादयः** । अहं ब्रह्मबन्धुः । अपि निखिललोकसुचरिते-त्यादिना वर्णितोऽपराधचक्रवर्ती । आदिशब्देन मुचुकुन्दग्रहणम् ॥

**वृषगिरिपतिं क्षिप्रं प्राप्ताः** । मुक्ताविति स्थाने वृषगिरिपतिप्राप्तिः । वृषगिरिर्धर्मगिरिः । पापिष्ठा धर्मगिरिं प्राप्नुवन्त्यघहरसदाचार्यकटाक्षेण । क्षिप्रमिति 'क्षिप्रं भवति धर्मात्मा' इति वचनस्य स्मारणम् ॥

**विश्वाचार्या विधिशिवमुखाः स्वाधिकारोपरुद्धाः** । यद्यपि ते सर्वज्ञा जगद्गुरवः 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति सूत्रप्रदर्शितरीत्या तेषामधिकारसमाप्त्यवधिको विलम्बः । विलम्बेन प्राप्तिस्तेषाम् । मम तु जडस्य क्षिप्रं प्राप्तिः ॥

**मन्ये माता जड इव सुते वत्सला मादृशे त्वम्** । मातृस्वभावप्रदर्शनेनोपपत्तिः ॥ ५० ॥

**अतिकृपणोऽपि जन्तुरधिगम्य दये भवती-**
**मशिथिलधर्मसेतुपदवीं रुचिरामचिरात् ।**
**अमितमहोर्मिजालमतिलङ्घ्य भवाम्बुनिधिं**
**भवति वृषाचलेशपदपत्तननित्यधनी ॥ ५१ ॥**

शतकमध्ये दयाप्रपदनं क्रियते षष्ठदशकेऽस्मिन् । प्रथमश्लोके, दशमश्लोके च प्रपदनस्य साक्षादनुसन्धानम् । तदुपयुक्ततया मध्ये प्रपत्तिप्रपत्तव्यस्वभावानुसन्धानम् । एकबुद्ध्यारूढत्वं दशकस्य । दयाघना अस्मत्तीर्थकरा दयायां भरन्यसनादधिकं कर्तव्यं नास्ति, तदेव हितमिति प्रथयन्ति । अतो लघीयस्यस्मिन्नुपायेऽकम्पनीया श्रद्धाऽस्माकम् । वृत्तं च नर्दटकम् । तच्च कुररीरुतासदृशमिव, यद्यपि मात्रासंख्यावैषम्यमस्ति । श्रुतिगीतैतद्वृत्तप्रणीता । इयमपरा प्रपत्तिपरा श्रुतिगीता ।

'श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः'

इति भागवते श्रुतिगीताविषये उक्तम् । अत्राप्युपक्रमे 'अतिकृपणोऽपि जन्तुर्नित्यधनी भवति' इत्युच्यते ।

'यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः'

इति भागवतोक्तक्रमेणेदं दशकं कविना वन्दित्वेन गीयते । 'क्वचिदजयात्मना च चरतोनुचरेन्निगम—' इति श्लोकखण्डव्याख्याने 'यतो वा इमानि भूतानि जायन्ते' 'यो ब्रह्माणं विदधाति पूर्वं........मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादिनिगमकदम्बकं त्वामेवंभूतं प्रतिपादयतीत्यर्थ इत्युक्तं श्रीधरमुनिभिः । तद्व्याख्याता चक्रवर्तिना चोक्तम् — 'यतो वा—'इति तटस्थलक्षणपरा श्रुतिः । 'यो ब्रह्माणम्—' इति शरणपरेयं श्रुतिरित्युभे श्रुती 'अजया चरतः' इत्यस्योदाहरणमिति । एवं च शरणागतिप्रतिपादकत्वमुक्तम् । आर्तकुररीवाद्विलपनवर्णनं भूयो दृष्टचरम् । 'नजभजजगणा लघुगुरुश्च' कुररीरुतायाम् ( ? )। 'नजभजजगणा लघुगुरुश्च' नर्दटके । उभयो रुदितानुगुण्यम् । नर्दनं चाक्रन्दनम् ।

'तरुणतमालनीलबहुलोन्नमदम्बुधराः शिशिरसमीरणावधुतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमतीर्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥'

इति कुररीरुतावृत्ते प्रियारहितमाधवस्याक्रन्दनं मालतीमाधवीये । वृत्तद्वयस्य करुणरसानुगुण्यं रसिकमनोवेद्यम् । 'रोरूयमाणां कुररीमिवार्ताम्' इति सभायां क्रन्दन्ती द्रौपदी वर्ण्यते । कृपणकरुणाक्रन्दनमिदं दशकम् । प्रपदनफलं च वृषाचलेश्वरपदपत्तननित्यवासरूपनित्यधनलाभः । फलस्य प्रथमश्लोके कीर्तनम् ॥

**अतिकृपणोऽपि जन्तुः** । 'अनितरशरणानामग्रिमस्यास्य जन्तोः' इति पादुकासहस्रान्ते । तत्रापि जन्तुरित्यात्मनिर्देशः । जन्तुरिति सर्वाधिकारत्वम् । कार्पण्यस्यातिशयेऽधिकारपूर्तिः । अनन्यगतित्वमुपपादितं पूर्वदशके । अकिञ्चनत्वं च ॥

**रुचिरामशिथिलधर्मसेतुपदवीं भवतीमधिगम्य** । क्लेशरहिता लघीयस्यदवीयसी पदवी रुचिरा । अशिथिलधर्मः सनातनोऽच्युतो धर्मो भगवान् । 'कृष्णं धर्मं सनातनम्' । 'अमृतस्यैव सेतुः' । धर्मसेतुर्भगवान्। 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय'। तत्प्रापकपदवी दया । यद्वा— अभंगुरो दृढः सेतुः शरणागतिधर्मः । सोऽमृतत्वप्रापकसेतुः । तन्निर्वर्तिका रुचिरा पदवी श्रीनिवासदया । अधिगम्य, प्राप्य, अध्यवसाय । अधिगम्येति पूर्वार्धे । अतिलङ्घ्येत्युत्तरार्धे । अधिगम्यातिलङ्घ्य । अधिगममात्रमलमतिलङ्घनायेति व्यज्यते । पूर्वार्धे उपायः । उत्तरार्धे फलं यथा द्वये फलस्याव्यवहितोत्तरत्वम् ॥

**अचिरादमितमहोर्मिजालमतिलंघ्य भवाम्बुनिधिम्** । तरितव्योऽनन्तभवार्णवः । अपरिमिता महत्यः कल्लोलमालाः । ऊर्मिषट्कवन्तमब्धिमतिलङ्घ्य । 'संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्' संसाराख्यो जलधिर्जलधेरपि महान् ।
'तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसङ्घाकुले च।' इति महत्त्वप्रदर्शनम् ॥

**भवति** । 'भवतीं पदवीत्वेनाधिगम्य भवति ।' सत्तावान् भवति । पूर्वमजात इदानीं जातः । अतिकृपणोऽपि नित्यधनी भवति । नित्यदरिद्रो नित्याढ्यो भवति । नित्यं निरपायमनन्तं धनं भगवत्पदम् । 'धनं मदीयं तव पादपङ्कजम्' 'नः कुलधनम्' 'धनंजयविवर्धनं धनमुदूढगोवर्धनं सुसाधनमबाधनं सुमनसां समाराधनम्' 'यदञ्जनाभं निरपायमस्ति मे धनञ्जयस्यन्दनभूषणं धनम्' इति बहुप्रकारैर्धनत्वनिरूपणं माधवस्य । बहुप्रकारैर्लौकिकधनं विगर्हितं श्रीशंकराचार्यैः 'धनं भयनिबन्धनं सततदुःखसंवर्धनं प्रचण्डतरकर्दनं स्फुटितबन्धुसंवर्धनम् । विशिष्टगुणबाधनं कृपणधीसमाराधनं न मुक्तिगतिसाधनं भवति नापि हृच्छोधनम्' । अनया रीत्या भगवतो धनत्वरूपणमाचार्यैः । कृपणधीसमाराधनमित्यस्य स्थाने सुम-

नसां समाराधनमिति । विशिष्टगुणबाधनमित्यस्य स्थानेऽबाधनमिति । न मुक्तिगतिसाधनमित्यस्य स्थाने सुसाधनमिति । वृषाचलस्य पदं धनम् । अचलं पदं वृषाचलेश्वरपदम् । यद्यपि गिरिनिवासी भगवान्, तत्पदं पत्तनम् । तत्र सर्वे नित्या मुक्ता मुमुक्षवश्च मिलिताः । 'अभिगम्य सम्यगनघाः सुमेधसो यतिचक्रवर्तिपदपद्मपत्तनम्' इति श्रीभाष्यकारस्य चरणस्य तत्पत्तनत्वेन वर्णनं तत्र सर्वेषामस्मदीयानां मिलितत्वद्योतनाय क्रयविक्रयाधिक्यसंभवाय च । पदपत्तने ध्वजादयः सन्ति । ग्रामधनिनां न धनाधिक्यं स्यात् । अयं पत्तनधनो । पदं पत्तनम् । तत्र नित्यधनी । पदेनैव धनी ॥ ५१ ॥

**अभिमुखभावसंपदभिसंभविनां भविनां**
**क्वचिदुपलक्षिता क्वचिदभङ्गुरगूढगतिः ।**
**विमलरसावहा वृषगिरीशदये भवती**
**सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ ५२ ॥**

आभिमुख्यमात्रेण प्रीता दया सर्वपापप्रायश्चित्तं भवति । सा सरस्वतीनदीव गूढमवस्थायोपकरोति । रात्रिमठेऽविदितं भोजयति माता सुतम् ॥

**अभिमुखभावसंपदभिसंभविनां भविनाम् ।** श्रीनिवासदयाभिमुखभावः संपत् ।'विपदो नैव विपदः संपदो नैव संपदः । विपद्विस्मरणं विष्णोः संपत्तस्यैव संस्मृतिः ।' 'भवन्ति संपदं दैवीमभिजातस्य भारत ।' 'मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ।' आभिमुख्यमात्रं बहुमनुते माता दया । एतत्संपदमभि जन्म, संपदभिसंभवः । संपदमभि संभवः । संभवो जन्म । 'एतमितः प्रेत्याभिसंभवितास्मि' इति शाण्डिल्यश्रुतिः । 'ब्रह्मलोकमभिसंभवानि' इति छन्दोगश्रुतिश्च स्मार्यते । अभिसंभवनं संपत्तिरूपफलप्राप्तिः । अत्र दयां प्रत्यभिमुखभिवनलक्षण एवाभिसंभवनरूपफलसिद्धिरिति व्यज्यते । भविनामिति सर्वाधिकारत्वद्योतनम् । मातृविषये आभिमुख्यमात्रे क आयासः ॥

क्वचिदुपलक्षिता क्वचिदभङ्गुरगूढगतिः । सरस्वती क्वचिद्भू-
दान्तर्वहति । लक्ष्यालक्ष्या दयाया गतिः । सर्वथा सा हितमेवाचरेत् ।
अप्रियमपि हितमेव । अप्रिये आपतिते तस्य वस्तुतो हितत्वमेव । अप्रिये
आपतिते तस्य वस्तुतो हितत्वं वयं न विद्मः । ईश्वरं च निर्दयत्वेनोपालभामहे ।
अप्रियरूपहितकरणं दया गूढमाचरति । यदा दयानिर्वृत्तं हितं प्रियमपि
भवति, तदा दयां श्लाघामहे । तदा सा प्रकाशमाचरति । निन्दन्तु, न-
न्दन्तु वा जनाः । दया तेषां हितमेवाचरेत् । 'अन्यच्छ्रेयः, अन्यच्छ्रेयः ॥'

विमलरसावहा वृषगिरीशदये भवती । अतिप्रसन्ना शुद्धा हितै-
कतानस्रोतोवहा दयासरस्वती । हितरूपरसावहा ॥

सपदि सरस्वतीव शमयत्यघमप्रतिघम् । सद्यः सर्वाघप्रायश्चित्तं
भवति । अत्र सरस्वतीदृष्टान्तसामञ्जस्यं रसिकानुभाव्यम् ॥ ५२ ॥

अपि करुणे जनस्य तरुणेन्दुविभूषणता-
मपि कमलासनत्वमपि धाम वृषाद्रिपतेः ।
तरतमतावशेन तनुते ननु ते विततिः
परहितवर्ष्मणा परिपचेलिमकेलिमती ॥ ५३ ॥

सर्वफलप्रदा दया । वांछितं कृत्स्नं दद्यात् । ईश्वरपदं ब्रह्मप-
दमपि लभ्यं ततः । अधिकारितारतम्येन तत्तद्वाञ्छितफलप्रदानं दयायाः
क्रीडा । वृषाधिपतिधामरूपोत्तमपदमपि दीयते तया । परहितभावनमेव
दयाशरीरम् । तदेव तस्याः क्रीडा । तथा च लीलासूत्रे लीलापदेन ब्रह्म-
स्वभावभूतदयाया लीला गम्यत इत्यपि भाववर्णनं शक्यम् ॥

करुणे जनस्य तरुणेन्दुविभूषणताम् ।

'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेळाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥'

इति शिवस्य दयास्वभावो व्यज्यते ॥

कमलासनत्वमपि । भगवन्नाभिकमलस्थत्वरूपभाग्यम् ॥

**वृषाद्रिपतेर्धामापि** । धाम पदं स्थानम् ॥

**परहितवर्ष्मणा परिपचेलिमकेलिमती** । परहितनिर्वर्तकत्वमेव दयाशरीरम् । वर्ष्म शरीरम् । दयाविततिर्दयातरङ्गमाला । परहित-रूपत्वेन परिणतत्वं तस्याः केलिः क्रीडा । 'परहितमनुकम्पे भावयन्त्यां भवत्याम्' इत्युक्तं पूर्वम् ॥ ५३ ॥

**धृतभुवना दये त्रिविधगत्यनुकूलतरा**
**वृषगिरिनाथपादपरिरम्भवती भवती ।**
**अविदितवैभवापि सुरसिन्धुरिवातनुते**
**सकृदवगाहमानमपतापमपापमपि ॥ ५४ ॥**

सरस्वतीसाम्यमुक्तम् । गङ्गासाम्यमुच्यते । त्रिपथगा गङ्गा । त्रिविधगत्यनुकूला । ऐश्वर्यकैवल्यमोक्षरूपत्रिविधगतिप्रापिका दया । सदा भगवत्पादसम्बद्धा गङ्गा ; दया च । सकृदवगाहनमात्रेणाघम् ; तापं च निवर्तयतः । सकृत्करणमात्रेण सर्वफलप्रदत्वरूपप्रपत्तिवैभवमत्र बोध्यते ।

'भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥'

इति श्रुतिगीताश्लोकोऽत्र विभावनीयः ॥

**धृतभुवना** । लोको ध्रियते त्वया ॥

**त्रिविधगत्यनुकूलतरा** । तरपा भक्तितोऽप्यानुकूल्यातिशयो द्योत्यते ॥

**वृषगिरिनाथपादपरिरम्भवती भवती** । 'रूढा वृषाचलपतेः पादे' इति पूर्वमुक्तम् । गिरेरेव नद्युत्पत्तिः संभवेत् । भगवत्पादाद्गङ्गोत्पद्यते । यदि भगवान्गिरिनाथो भवेत्तथा तत्पादाद्गङ्गोद्भवे दृष्टनियमानुगुण्यं स्फुटम् ॥

**अविदितवैभवापि** । दयावैभवपरिज्ञानमप्यनपेक्षितम् । 'अनि-

च्छयापि संस्पृष्टो दहत्येव हि पावकः' इत्यादिकमिह भाव्यम् । भगवन्नाम्नो यथाऽविदितत्वेऽपि कार्यकरत्वं तथा भगवद्दयाया अपि ॥

**सकृदवगाहमानम्** । 'सकृत्कृतः शास्त्रार्थः' इति प्रसिद्धन्यायस्य स्मरणं सकृदिति । प्रपत्तिः परमशास्त्रार्थः । तद्विषये सकृत्त्वमेव न्याय्यम् ॥

**सुरसिन्धुरिवापतापमपापमप्यातनुते** । न केवलं बाह्यतापनिवृत्तिः; तापत्रयस्यापि निवृत्तिः । त्रिस्रोतसस्त्रिविधतापनिवर्तकत्वमुचितम् । तापनिवृत्तिर्दृष्टा । पापनिवृत्तिरदृष्टा । यथा तापनिवृत्तिर्गङ्गास्नानादौ दृष्टत्वादसन्दिग्धा; तथा पापनिवृत्तिरप्यसन्दिग्धादृष्टत्वेऽपि । पापनिवृत्तिनिश्चयो तापनिवृत्तिर्भवति । 'इति तव सूरयस्त्वधिपतेऽखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः' इति श्रुतिगीताश्लोकोऽत्र कविबुद्धिस्थ इव ॥ ५४ ॥

**निगमसमाश्रिता निखिललोकसमृद्धिकरी**
**भजदघकूलमुद्रुजगतिः परितस्सहिता ।**
**प्रकटितहंसमत्स्यकमठाद्यवतारशता**
**विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥ ५५ ॥**

गङ्गादृष्टान्तस्यातिसामञ्जस्यात्पुनरपि स एव प्रस्तूयते । वेदप्रतिपाद्यत्वम्, कूलातिलङ्घिप्रवाहवत्त्वम्; स्वप्रवाहेषु हंसमत्स्यकमठाद्यवतारप्रदर्शकत्वमित्यादिसमानाकाराः प्रदर्श्यन्ते पूर्णोपमालाभाय । अवताराश्च करुणाप्रवाहाः । विभवानां नदीप्रवाहसाम्यं वर्णितं श्रीमल्लोकदेशिकैः । तदत्र स्मर्तव्यम् । भगवद्दयापरिवाहस्मरणं प्रपदनदशायाम् ॥

**निगमसमाश्रिता** । उभयोर्निगमप्रतिपाद्यत्वमस्ति । 'मोक्षाकांक्षी प्रपद्ये शरणमहमिति क्वापि मन्त्रे श्रुतं च' इत्युक्तमधिकरणसारावल्याम् ॥

**निखिललोकसमृद्धिकरी** । पुण्यसमृद्धिर्धान्यादिसमृद्धिश्च । दृष्टादृष्टसर्वसमृद्धिः । सर्वजनाभ्युदयकरी दया ॥

**भजदघकूलमुद्रुजगतिः** । प्रवाहसमये यथा गङ्गा कूलमुल्लङ्घ्य कूलबहिर्वर्तिनोऽपि प्रदेशान् संप्लावयति ; तथा दया आत्मानं भजतामघा-

न्युद्वेलप्रवाहैर्मज्जयति ॥

**परितप्तहिता** । परितापोऽनुतापः । पश्चात्तापः । तन्मत्वतामपि हिता । गाढतप्तानां हिता ॥

**प्रकटितहंसमत्स्यकमठाद्यवतारशता** । हंसमत्स्यौ नष्टवेदसम्पादनेन विद्याप्रवर्तकौ । शतमित्यानन्त्योपलक्षणम् ॥

**विबुधसरिच्छ्रियं वृषगिरीशदये वहसि** । गङ्गासरिच्छ्रियं भजसे ॥५२॥

**जगति मितम्पचा त्वदितरा तु दये तरला**
**फलनियमोज्झिता भवति सन्तपनाय पुनः ।**
**त्वमिह निरङ्कुशप्रशकनादिविभूतिमती**
**वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥ ५६ ॥**

श्रीनिवासदयाप्रपदने तदैकान्त्यम्, तदितरवैमुख्यं चापेक्ष्यते । तदर्थमितरदयातो वैलक्षण्यप्रदर्शनम् । निधिभूतो भगवानेव दीयते प्रपत्त्रे दयया । 'स्मरतः पादकमलमात्मानमपि यच्छति ।' 'य आत्मदाः ॥'

**फलनियमोज्झिता** । सन्दिग्धफला ।

**भवति सन्तपनाय पुनः** । पुनः सन्तापप्रापिका ॥

**त्वमिह** । त्वदितरस्याः स्वभाव उक्तः पूर्वार्धे । उत्तरायास्तव प्रभाव उत्तरार्धे कथ्यते ॥

**निरंकुशप्रशकनादिविभूतिमती** । उत्तमगुणभूतायास्तव विभूतयो गुणाः । निरङ्कुशशक्तिर्निरङ्कुशस्वातन्त्र्यमित्यादयो गुणा दयाभिप्रेतनिर्वाहकाः ॥

**वितरसि देहिनां निरवधिं वृषशैलनिधिम्** । देहिनामिति सर्वाधिकारत्वं सूच्यते । देहवद्भ्योऽपि समर्प्यते भगवान् दययेति च व्यज्यते । आत्मसमर्पणं कृतवते भगवान् वितीर्यते समर्प्यते दयया । अतिकृपणस्य नित्यधनित्वं भवति निरवधिनिधिलाभेन । निधिश्च भगवत्पादः ॥ ५६ ॥

**सकरुणलौकिकप्रभुपरिग्रहनिग्रहयो-**
**र्नियतिमुपाधिचक्रपरिवृत्तिपरम्परया ।**

**वृषभमहीधरेशकरुणे वितरङ्गयतां**
**श्रुतिमितसम्पदि त्वयि कथं भविता विशयः ॥ ५७ ॥**

संशयाभावो महाविश्वासश्चापेक्ष्येते दयाप्रपत्तौ । तावुपपाद्येते । वैदिकावैदिकसाधारणी सर्वाधिकारिका दयाप्रपत्तिः । 'यथा लोकाम्नायम्' इति लोकवेदसम्प्रतिपत्तिरावश्यकी विश्वासदार्ढ्याय। लोकस्वभावानुरोधिनि भूयान् विश्वासः स्यात् सर्वेषाम् । आनुकूल्ये दयाप्रसरः ; प्रातिकूल्ये दयोपरोधो निग्रहश्चेति लोकस्वभावप्रदर्शनेनानुकूल्यसङ्कल्पप्रातिकूल्यवर्जन-रूपाङ्गे अपि बोध्येते । 'कथमयथा भवन्ति भुवि दत्तपदानि नृणाम्' 'भवत उपासतेऽग्रिमभवं भुवि विश्वसिताः' इत्यादिकं श्रुतिगीतोक्तमत्र भाव्यम् । "यच्च 'तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति' इत्यत्र प्रपत्तिविधिर्न दृश्यत इति तत्रापि तात्पर्यतः प्रपन्नसंरक्षणं कारुणिकानां स्वभाव इत्येतात्सि-द्ध्यति । तावति सिद्धे कैमुतिकन्यायेन लब्धमपारकारुण्यजलधेरीश्वरस्य प्रपन्नसंरक्षणम्" इति लौकिककारुणिकप्रभुदृष्टान्तप्रदर्शनं निक्षेपरक्षायाम् । तदत्र विभावनीयम् ॥

**उपाधिचक्रपरिवृत्तिपरम्परया** । उपाधिर्दयाप्रयोजकमानुकूल्यम्, तन्निरोधकं प्रातिकूल्यं च ॥

**सकरुणलौकिकप्रभुपरिग्रहनिग्रहयोर्नियतिम्** । आनुकूल्येना-नुग्रहः, प्रातिकूल्येन निग्रहश्च नियतः । सकरुणः प्रभुः सपक्षः । निष्करुणो विपक्षः ॥

**वितरङ्गयताम्** । विगतसंशयं विचिन्वताम् । तरङ्गाणां डो-लायितत्वं स्वभावः । संशयडोलाशून्यत्वं वितरङ्गत्वम् ॥

**श्रुतिमितसम्पदि त्वयि** । सम्पद्वैभवम् । श्रुतिराप्ततमा माता-पितृसहस्रेभ्यो वत्सलतरा निर्दोषा, तया मितस्त्वदनुभावः ॥

**कथं विशयो भविता** । न संशयस्यावकाशः ॥ ५७ ॥

**वृषगिरिकृष्णमेघजनितां जनितापहरां**
**त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्ततृषः ।**

बहुषु जलाशयेषु बहुमानमपोह्य दये
न जहति सत्पथं जगति चातकवत्कृतिनः ॥ ९८ ॥

श्रीनिवासो वृषगिरिशिखरमाश्लिष्टः कृष्णमेघः । श्रीस्तस्मिन् तडित् ।

'मा भूदेवं पुनरपि च ते विद्युता विप्रयोगः'

इति मङ्गळाशासनं कविसार्वभौमेन मेघविषये मेघे । अस्य श्रीनिवासकृष्ण-मेघस्य न कदाऽपि लक्ष्मीविद्युता विप्रयोगः । करुणापूर्णोऽयं मेघः सदा दयावृष्टिवर्षुकः । जनितापहरास्मद्दयावृष्टिः । तया तृष्णिवृत्तिः । चातक-सदृशत्वं तत्प्रपन्नानाम् । 'द्वौ तौ सुपर्णौ' उभावपि पक्षिणौ । प्रपत्ता चा-तकः । प्रपत्तव्यः कपोतः । निवृत्ततर्षा अपि त्वद्रसपाने तृषावन्तः । 'निवृत्ततर्षैरुपगीयमानात्—' 'निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भ-क्तिमित्थम्भूतगुणो हरिः ॥' इत्यादिकं स्मार्यते निवृत्ततृष इति ॥

**वृषगिरिकृष्णमेघजनिताम्** । कारुण्यवर्षुककृष्णमेघो वृषागि-रिशिखरमाश्लिष्य शीतशीतां प्रभूतां दयां सन्ततं वर्षति ॥

**जनितापहराम्** । दयावृष्टिर्जनिता । जनिता सा जनिदुःखवे-दिनी जनिमत्सु भृशमनुकम्प्य जनितापं सद्योऽपहरति । जनितेव जनितापं जानीयात् तमपजिहीर्षेच्च । जनिता जन्मसमूहमपहरति ॥

**त्वदभिमतिं सुवृष्टिम्** । त्वदभिमतिरेव शोभना शीतला वृष्टिः ॥

**उपजीव्य निवृत्ततृषः** । दयया त्वया सञ्जीविता वर्धिताः 'वर्षेणं बीजं प्रतिसञ्जहर्ष' इतीव हृष्टाः । त्वामुपजीव्य पिपासोपशमं प्राप्य फल-सिद्ध्यनन्तरं त्वां न विस्मरेयुः । उपजीव्यावज्ञानमत्यन्तमन्याय्यमिति व्यज्यते उपजीव्येति । निवृत्ततृष इति शुकोक्तः 'निवृत्ततर्षैरुपगीयमानात्' इति श्लोकः स्मार्यते । निष्पन्नसाधनैरपि स्वयं फलतया सततं निपीयते । निवृत्तर्षा अङ्कुरितापिपासत्वादिगुणाष्टकाः । 'परिणमन्त्यपवर्गदशांकुराः' इति सङ्कल्पसूर्योदये ॥

**बहुषु जलाशयेषु बहुमानमपोह्य दये** । पूर्वचिरपरिचितबहुरसा-

शयत्यागः । जलाशयेष्वित्यपि ॥

**न जहति सत्पथं चातकवत् कृतिनः** । आकाशं न त्यजन्ति । कारुण्यैकान्तिनः कृतिनो भवन्ति । संप्रदायमार्गभूतं पारमैकान्त्यं न जहति । 'कृतिनः कमलावासकारुण्यैकान्तिनो भजे ।' विपुलायां पृथिव्यां त एव कृतिनः ॥ ५८ ॥

**त्वदुदयतूलिकाभिरमुना वृषशैलजुषा**
**स्थिरचरशिल्पिनैव परिकल्पितचित्रधियः ।**
**यतिपतियामुनप्रभृतयः प्रथयन्ति दये**
**जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥ ५९ ॥**

रक्षणप्रार्थनं करिष्यतेऽनन्तरश्लोके । तत्पूर्वं प्रपत्त्युपायद्रष्टारस्तत्प्रदर्शयितार ऋषयस्तीर्थकराः स्मर्यन्ते । आचार्यस्मरणमावश्यकम् । शरणागतिदशकस्यास्य प्रारम्भात् पूर्वं पञ्चमदशकान्ते 'सद्देशिकात्मा' इति दयाया देशिकात्मत्वमुक्तम् । दयाया देशिकशोभनधीनिमित्तकत्वमुच्यतेऽत्र । एवंच दया निमित्तकारणम् ; प्रकृतिश्चाचार्यबुद्धीनाम् । अत्र वक्तव्यं प्रागेवोपोद्घात उक्तम् ॥

**त्वदुदयतूलिकाभिः** । दयोदय एव तूलिका भवति । उदय इति सौकुमार्यं तूलिकायाः । न कृपारूपिता क्रीडातूलिका यथेतरसृष्टौ । दयोदयमय्यस्तूलिकाः । नैका तूलिका , किन्तु बह्व्यस्तूलिकाः । यावत्तापि नवनवोदयतूलिकाभिः पुनः पुनर्लिख्यते आचार्यधीचित्रम् । असकृल्लिख्यते चित्रं प्रमृज्य प्रमृज्य आ परितोषादात्मनः । 'अनपेक्षः शुचिर्दक्षः करुणामृतसागरः' इति गुरुवर्णनं श्रीशङ्कराचार्यैः ॥

**अमुना वृषशैलजुषा स्थिरचराशिल्पिनैव** । अनेनैवाव्याकृतव्याकृतसर्वस्रष्ट्रा । न चतुर्मुखेन व्याकृतमात्रस्रष्ट्रा । अव्याकृतस्य व्याकृतापेक्षया स्थिरत्वम् । स्थिरत्वम् , चरत्वमुभयं प्रदर्शनीयं चित्रे । दयाकल्लोलानां चरत्वम् , दयाया अकम्पनीयत्वरूपस्थिरत्वं च । सागरलेखने

तरङ्गाणां चरत्वमुदधेरक्षोभ्यत्वरूपगाम्भीर्यं च प्रदर्शनीयं शिल्पिना । स्थिरचरदयासागररूपचित्रलेखनं स्थिरचरशिल्पिना सुशकम् । 'स्थिरतरशिल्पिना' इति वा पाठः । 'उन्मीलितं तूलिकयेव चित्रम्' 'क्रीडातूलिकया स्वास्मिन् कृपारूषितया स्वयम् । एको विश्वमिदं चित्रं विभुः श्रीमानजीजनत् ॥' इत्यादिकमिह भाव्यम् ॥

**परिकल्पितचित्रधियः ।** 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति विश्वसृष्टेः कल्पनत्वेन व्यवह्रियते । अत्र परिकल्पनमित्यवधानाधिक्यं सूच्यते ॥

**यतिपतियामुनप्रभृतयः ।** 'पत्युः संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोः सम्बन्धेन समिध्यमानविभवान् धन्यांस्तथान्यान् गुरून्' इति यतिपतेः प्रथमग्रहणम् । 'बहुभिरुपचितं यामुनेयप्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः' इति सम्यक्त्राता यतिपतिः । तीर्थकराः करुणामूर्तयः । परमकल्याण्यस्तेषां बुद्धयः ॥

**प्रथयन्ति दये जगति हितं न नस्त्वयि भरन्यसनादधिकम् ।** अकिञ्चनानां सुलभतममुपायं करुणया प्रकाशयन्ति । 'अनन्यसाध्यस्वाभीष्टसाधनसमर्थवशीकरणं शरणागतिः' इति लक्षणोक्तिर्निक्षेपरक्षायाम् ॥५९॥

**मृदुहृदये दये मृदितकामहिते महिते**
**धृतविबुधे बुधेषु विततात्मधुरे मधुरे ।**
**वृषगिरिसार्वभौमदयिते मयि ते महतीं**
**भवुकनिधे निधेहि भवमूलहरां लहरीम् ॥ ६० ॥**

मधुरमधुरमतिकरुणमाक्रन्द्यते शरणागत्यवसरे । आचार्यप्रदर्शितत्वेन पूर्वश्लोकोक्तभरन्यसनमनुष्ठीयते ॥

**मृदुहृदये दये ।** 'मृदुर्दयालुर्मधुरः' इति गुणपाठक्रमोऽत्रानुस्रियते ॥

**मृदितकामहिते महिते ।** 'परित्यक्ता मया लङ्का' इति काम्यपरित्यागिविषये हिता । अत एव महिता । 'यस्यानुग्रहमिच्छामि

तस्य वित्तं हराम्यहम्' इति काम्यमानमर्दनरूपहितमप्यनुग्रहकार्यम् ।
मृदितकामत्वेन त्वं पूज्यसे मनीषिभिः; कामापमर्दस्य वस्तुतो हितत्वात् ।
'विपदः सन्तु मे नित्यम्—' इति कुन्ती । "अधनोऽयं धनं प्राप्य मा-
द्यन्नुच्चैर्न मां स्मरेत्' । इति कारुणिको नूनं धनं मे भूरि नाददात्" इति
कुचेलः ॥

धृतविबुधे । विबुधानां धारकपोषकभूता दया । तद्भारस्तया
ध्रियते ॥

बुधेषु विधृतात्मधुरे मधुरे । महत्सु गुरुषु चेतनरक्षणरूप-
स्वभरो निक्षिप्यते दयया । अत एव मधुरा दया ॥

वृषगिरिसार्वभौमदयिते । श्रीनिवासवल्लभे ॥

मधुकनिधे । मङ्गळनिधे ॥

भवमूलहरां लहरीम् । संसारनिर्मूलनीं तव कल्लोलमालाम् ॥

मयि निधेहि । मदात्मभरस्त्वयि न्यधायि । त्वदात्मभूतां त्वल्ल-
हरीं मयि निधेहि ।

**अकूपारैरेकोदकसमयवैतण्डिकजवै-**
**रनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्यबडवाम् ।**
**कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपति-**
**स्वरूपद्वैगुण्यद्विगुणनिजबिन्दुः प्रवहसि** ॥ ६१ ॥

भरो न्यस्तः । निर्भरत्वे निर्भयत्वम् । कृतकृत्यताबुद्धिः प्रद-
र्श्यते । भगवतः सर्वेषां भयम् । 'भीषास्माद्वातः पवते' 'भयादस्याग्नि-
स्तपति' 'महद्भयं वज्रमुद्यतमिव' इति श्रूयते । अतो निर्भयत्वसिद्ध्यै
भगवतो दयापराधीनत्वं विलीनस्वातन्त्र्यत्वम् ; दयाया भगवतोप्यतिबृहत्त्व-
मित्यादिकं निर्भयत्वोपयुक्तं सर्वमत्र प्रदर्श्यते । अनन्तरदशके दयायाः
स्वरूपम् , तदुपकारपरम्पराक्रमश्च प्रदर्श्यते । अस्मिन् दशके शिखरि-
णीवृत्तम् । प्रज्ञाप्रासादमारुह्य योगारूढेन वृषगिरिशिखरे स्थित्वा निर्भयत्वं,

निर्भरत्वं च शिखरिणीवृत्तेन गीयते । प्रथमश्लोकेऽविद्याबडबानिर्वापणम् ; निरतिशयबृहतो ब्रह्मणोऽपि दयाया बृहत्तरत्वं चोच्यते । 'भवमूलहरा दयालहरी' इत्युक्तम् । भवमूलमविद्याख्यसंवर्ताग्निः । कथं तस्य दयावीचिभिर्निर्वापणं शक्यमित्याक्षिप्योच्यते ॥

**अकूपारैरेकोदकसमयवैतण्डिकजवैः।** एकार्णवसमयः प्रलयसमयः । निरतिशयं वर्धन्ते तदाकूपाराः समुद्राः । अप्रतिहतः प्रचण्डो वेगः प्रलयपयोध्यम्भसां प्रलयप्रवृत्तिसमये । वैतण्डिकस्याप्रतिहतः संरम्भरूपो जवः । न तस्य स्वपक्षः कश्चित् । सर्वं परपक्षं प्रचण्डवेगैः कटुवाग्वर्षैर्निरस्यन्छन्दमयीं करोति सभाम् । प्रलयोदकस्य न कोऽपि स्वपक्षरक्ष्यो भवति ॥

**अनिर्वाप्यामविद्याख्यबडवाम्।** विश्वप्रलयेऽप्यविद्या न प्रलीयते । अविद्याशब्दः कर्मपरः । विद्येतरत्कर्म । 'अविद्या कर्मसंज्ञान्या' 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' इति सूत्रम् । अविद्याग्निनिर्वापणाय नालं संवर्तसागराः ॥

**क्षिप्रं क्षपयितुम्।** क्षणमात्रेण शमयितुम् ॥

**कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपतिस्वरूपद्वैगुण्यद्विगुणनिजबिन्दुः प्रभवसि।** प्रकृतिमण्डलं कृत्स्नमेकोदकीभूतम् । वैतण्डिकवदप्रतिहतजवः प्रलयार्णवः । तेनाप्यनिर्वाप्याविद्या । तत्रोऽपि बृहतैव सागरेण तन्निर्वापणसंभवः । वितण्डावादेन न स्वस्य परस्य वा अविद्योच्छिद्येत । चतुष्पादुभयविभूतिविशिष्टं ब्रह्म । 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।' एकोदकीभूतलीलाविभूतेश्चतुर्गुणपरिमाणं ब्रह्म । चतुष्पदस्य ब्रह्मणोऽपि चतुर्गुणबृहन्दयाबिन्दुरिति दयाप्रवाहस्य निरतिशयबृहत्त्वं ब्रह्मापेक्षयापि । द्वैगुण्यद्विगुणनिजबिन्दुरिति शतगुणितोत्तरक्रमवद्द्विगुणस्य द्विगुणत्वेनाभ्यासः । ब्रह्मणश्चतुष्पात्त्वप्रदर्शनरीत्या दयाबिन्दोर्ब्रह्मापेक्षया चतुर्गुणबृहत्त्ववर्णनम् । तव प्रबंहणसंरम्भो वैतण्डिकसंरम्भादधिकः । ब्रह्मदयासिन्धुर्ब्रह्मसिन्धुमतिशेते ॥ ६१ ॥

**विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये**
**पटुप्रत्याहारप्रभृतपुटपाकप्रचाकिताः ।**
**नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे**
**निरुद्धत्वद्द्रोहा नृपतिसुतनीतिं न जहति ॥ ६२ ॥**

किं प्रपत्तिरेका प्रायश्चित्तं भवति ? किं भक्तिर्न प्रायश्चित्तं भवति पूर्वपापानाम् ।

'तादृग्विद्यैव तन्निष्कृतिरिति हि विदांचक्रुराम्नायवृद्धाः'

इति विद्यायाः प्रायश्चित्तत्वमुक्तं तत्त्वमुक्ताकलापे । यदि पूर्वाघानि नष्टानि उत्तराघानां कथं शमनम् ? एवं पृष्टे--उच्यते ॥

**विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये ।**

'कामातङ्कमतीत्य कोपदहनं निर्वाप्य वित्तस्पृहावेतालीं व्यवधूय'

इति सङ्कल्पसूर्योदये । अविद्यादहननिर्वापणमुक्तं पूर्वश्लोके । अत्र वित्तादिकाम्यस्पृहारूपविवित्सावेताळीनिरास उच्यते । यथा कथञ्चिद्वैराग्यलाभेऽपि ; असङ्गेऽपि हृदये ॥

**पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः** । तीव्रप्रत्याहारधारणाध्यानादिरूपोग्रतपश्चर्याया भीताः । तीव्रतपोरूपभक्तियोगानुष्ठानाक्षमाः । भक्तौ शक्त्यभावः कारणं दयाप्रपदने । अशक्तानां त्वमेव शरणम् ॥

**नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे** । नारायणकीर्तनं पितृत्वादिसम्बन्धद्योतकम् । नारायणसंज्ञा गिरः । गिरिश्च घनीभूता दया । तथा च नारायणत्वं दयायाः सिद्ध्यति । प्रपदनमन्त्रदृष्टनारायणशब्दग्रहणम् । कूटस्थ इति निर्विकारत्वमुच्यते । निर्विकारः कूटस्थोऽपि भगवान् दयया भृशं विक्रियते द्रवीभवति । त्वामेव नमन्तः शरणीकुर्वन्तः ॥

**निरुद्धत्वद्द्रोहाः** । त्वत्प्रातिकूल्यविमुखाः । पूर्वार्धे पुटपाकत्वेन निरोधपर्यायसमाधिरूपभक्तियोगो वर्णितः ।

'यत्रोपरमते चित्तं निरुद्धं योगसेवया'

इति गीतायाम् । 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलं सूत्रम् । यद्यपि प्रपन्नानां निरोधाख्यसमाधिर्नास्ति, तेषामस्ति त्वद्द्रोहनिरोधसङ्कल्पः । एवं च लघूपायभूतप्रपत्तौ न निरोधाभाव इति निरुद्धशब्देन व्यज्यते ॥

**नृपतिसुतनीतिं न जहाति ।**

'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत्'

इति न्यायो दयाप्रपन्नमात्रविषयः । अयं च दयोपकारः । उत्तराघप्रसङ्गस्य दुर्वारत्वेऽपि न तया प्रसक्त्या निर्भयत्वविरोधः ॥ ६२ ॥

**अनन्याधीनः सन्भवति परतन्त्रः प्रणमतां**
**कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ।**
**पतिस्त्वत्पारार्थ्यं प्रथयति वृषक्ष्माधरपति-**
**र्व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥ ६३ ॥**

**कथं लघुर्दण्डो भवेत् सति स्वतन्त्रे दण्डधरे सर्वज्ञे भगवति ? न** स्वतन्त्रः सः । न केवलं दयापरतन्त्रः, किं तु ये दयां प्रपन्नास्तत्परतन्त्रोऽपि भवति । सर्वज्ञोऽपि तेषां दोषं न गणयति । इत्थं दयया वैयात्यक्रीडया 'नाभुक्तं क्षीयते कर्म' 'यः सर्वज्ञः सर्ववित्' इत्यादिशास्त्रमर्यादा व्याकुलीक्रियते । 'अनन्याधीनत्वं तव निजगदुर्वैदिकगिरः पराधीनं त्वां तु प्रणतपरतन्त्रं मनुमहे । उपालम्भोऽयं भोः स्पृशति तव साम्यमपि .... .... ॥' इति श्रीवत्साङ्कमिश्राणां श्लोकोऽनुसंधीयते ॥

**अनन्याधीनः सन् ।** अनन्याधीनसत्तारूपनिरुपाधिकस्वतन्त्रसत्ता भगवत एव । अनन्याधीनत्वं स्वातन्त्र्यम् । 'न तस्येशे कश्चन ॥'

**भवति परतन्त्रः प्रणमताम् ।** प्रणमतां प्रपन्नानाम् । प्रणामक्षण एव परतन्त्रोऽपि भवतीति व्यज्यते प्रणमतामिति शत्रा । बहुवचनेनानेकेषां प्रपन्नानामधीनो भवतीत्युच्यते । तद्भक्तानामप्यधीनो भवतीति वा ॥

**कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम्** । सर्वद्रष्टा न पश्यतीति नोक्तम् । पश्यन्नपि न तद्गणयति । दण्डनार्हत्वेन न मनुते । दण्डनसङ्कल्पं न कुरुते । अनन्तापकृतिषु नैकामपि गणयतीत्येकवचनेन व्यज्यते । जातावेकवचनं वा ।

'न स्मरत्यपकाराणां शतमप्यात्मवत्तया' ।

अपकाराणां शतमिति बहूनामप्येकत्वेन ग्रहणं क्षान्तिविस्मरणसौकर्याय । 'अविज्ञाता सहस्रांशुः' इति नाम्नोर्व्याख्याने ''सहस्रम्–अपरिमिताः, अंशवः ज्ञानान्यस्येति । ननु आश्रितापराधव्यतिरिक्तसर्वज्ञ इति विप्रतिषिद्धम्, न, तदपराधेष्वतात्पर्येणोपेक्षा ह्यज्ञानं विवक्षिता । उपेक्षते हि तेषां दोषम् 'दोषो यद्यपि तस्य स्यात्' इति'' इति भट्टपादाः ॥

**पतिस्त्वत्पारार्थ्यं वृषक्ष्माधरपतिः प्रथयति** । शेषः परार्थत्वात् । पारार्थ्यं शेषत्वम् । सर्वशेषित्वं श्रीनिवासस्य । तस्य त्वच्छेषत्वम् । पत्न्याः पतिशेषत्वं न्याय्यम् । विपर्यस्तं तदत्र ॥

**व्यवस्थां वैशात्यादिति विघटयन्ती विहरसि** । स्वातन्त्र्यसार्वज्ञ्यशेषित्वानि व्यवस्थितानीश्वरलक्षणानि । तवौद्धत्यात् सर्वा व्यवस्थाऽपहीयते । एवं त्वं क्रीडसि ॥ ६३ ॥

**अपां पत्युः शत्रुनसहनमुनेर्धर्मनिगडं**
**कृपे काकस्यैकं हितमिति छिनत्ति स्म नयनम् ।**
**विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभि-**
**र्दिशत्येवं देवो जनितसुगतिं दण्डनविधिम् ॥ ६४ ॥**

कर्मणः क्षपणमुक्तं प्रपत्तिरूपप्रणामस्य सर्वप्रायश्चित्तस्वरूपप्रभावेण । प्रपन्नस्य दण्डस्य लघूभवनमुक्तम् । दण्डस्यैवानुग्रहीभवनमुच्यते । निग्रहस्याप्यनुग्रहीभवनेन दयाप्रभावः प्रतिष्ठाप्येत । 'क्रोधोऽपि तेऽनुग्रह एव संमतः' इति कालियपत्न्यः कृष्णस्य तत्पातिजिघांसोदये ।

'परस्य दमकर्तुर्हि हिंसा केनात्र कल्प्यते'

इति श्रीमद्भागवते सप्तमप्रथमे। 'परस्य दमकर्तुः, हितार्थं दण्डं करोतीत्यर्थः। इति श्रीधरमुनयः ॥

अपां पत्युः शत्रून् । अपां निधिर्भगवान् । अपां पतिः सागरः ।

'समुद्धतममित्रघ्नो रामो नदनदीपतिम्'

इति प्रपदनात्पूर्वमुक्तम् ।

'गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः'

इति प्रपदनावसरे सर्वाभिः पत्नीभिः पुण्यनदीभिः समावृत आगादित्युक्तम् । पत्नीभिः समावृतत्वेनागमनं दयोत्तम्भनार्थम् । ताभिः सम्यगाच्छादित आगच्छतीति सूच्यते समावृतशब्देन । सम्यगावृत आयाति । स्त्रीमध्ये पुरुषाकृतिरेव न दृश्यते । प्रसादनावसरे उक्तं प्राञ्जलिना—

'पृथिवी वायुराकाशमापो ज्योतिश्च राघव ।
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥
तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः ।
विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥'

इति । अपां पत्युरगाधत्वनियमप्रवदनेन समाधिः । जगन्मङ्गळभूतानां गङ्गादिनदीनां पतिहान्याऽमङ्गलीभवनं लोकानर्थाय भवेत् । इदं सर्वं व्यज्यते अपां पत्युरिति । प्रसादनोत्तरक्षणे उक्तं भगवता

'तमब्रवीत् तदा राम उद्धतो हि नदीपते ।
अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम् ॥'

इति । तदा रामस्तत्क्षण एव सुप्रसन्नो रामोऽभूदिति ऋषेर्विस्मयः । सागरविषयो महान् क्रोधः प्रणतसागरक्रोधानुगो भूत्वा तच्छत्रुषु प्रससार । 'प्रणतप्रतिकूलमूलघाती प्रतिघः कोऽपि —' इत्युक्तम् । पूर्वश्लोके 'भवति परतन्त्रः प्रणमताम्' इत्युक्तम् । अत्र रामस्तत्क्रोधश्च किङ्करत्वमुपयातः प्रपन्नस्य, तच्छत्रुविषयतत्क्रोधस्य चेति चारु प्रदर्श्यत इति रसिकैर्भाव्यम् ।

'उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः'

इति बहुशत्रुहिंसा द्योत्यते शत्रूनिति बहुवचनेन । बहुवचनेनार्षबहुशब्द-स्मारणम् ॥

असहनमुनेर्धर्मनिगडम् । पितृहन्तॄनपि शत्रुक्षत्रियान् कदाचित्सहेत । क्षत्रियस्य स्वांशिनोऽपि रामस्य वीर्यख्यातिं नैव सहेतेति द्योत्यतेऽसहनमुनेरिति । असहनं चासूया । महदप्रीतिनिमित्तमसूया नाम भगवतः । त्रस्यति भगवानभ्यसूयद्भ्यः । 'न च मां योऽभ्यसूयति' इति गीतान्ते । 'मा भैषीः, मा शुचः' इति तवाभयं ददामि । सर्वभूतेभ्योऽभयं ते ददामि । अहं तु सासूयाद्बिभेमि ।

'ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥'

इति चोक्तं तृतीये । तादृशासूयालुविषये

'क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु'

इति तीव्रकोपेन कर्मनिगडदृढीकरणं न्याय्यम् । प्रथमपादोक्तसागरविषये बाह्यास्तस्य शत्रवो जघ्निरे । अस्य विषये आन्तरशत्रुभूतकर्महननमित्यनुग्रहाधिक्यम् । धर्मस्यापि निगडत्वं बन्धकत्वात् ।

'कस्मै स्वदेत सुखसञ्चरणोत्सुकाय कारागृहे कनकशृङ्खलयापि बन्धः ।'

शत्रुर्निगडेन बध्येत । अयं शत्रुर्दुर्मोचोत्कटकर्मकोटिनिगडान्मोच्यत इति व्यज्यते निगडशब्देन ।

'धर्मं त्रैवर्गिकं च स्वयमिह निगमः पापकोटौ पपाठ'

इत्युक्तं तत्त्वमुक्ताकलापे ॥

**कूपे काकस्यैकं हितमिति हिनस्ति स्म नयनम्** । अपां पतिराधिकारिको देवः । जामदग्न्यो भगवदवतारभूतो विप्रः । तयोरुभयोर्दण्डो न न्याय्यः । तद्विषये दयाप्रदर्शनेन न दया प्रशंसोपपादिता स्यात् । अतोऽत्र काकासुरवृत्तान्तप्रदर्शनम् । सीतास्तननिपतिते नयने अपराधिनी । स्तनमांसगर्धया भूयान् व्रणः कृतः । गरीयानस्याप-

राधः । प्रत्ययश्चापराधः । अयं न प्रगतिबुद्ध्या प्रणनाम । केवलं भूमावशक्त्या निपपात । 'प्रगत इति दयालुः' इति स्तोत्ररत्ने । अत्र हितमिति हिनस्ति स्म नयनमित्युच्यते । तस्य हितं स्यादिति बुद्ध्यभावे तावतीं हिंसामपि न कुर्यादिति भावः । शस्त्रवैद्यकृतहिंसादेरिव हितत्वमस्या हिंसायाः । तत्र देहस्य हितत्वमत्रात्मन इति भेदः । 'सकृदेव प्रपन्नाय' इत्युपायगतैकत्वं फलरूपात्मनीननयनहिंसायामन्वितमभूदिव ॥

**विलीनस्वातन्त्र्यः** । सागरशोषणरूपप्रळये प्रसक्ते स्वस्वातन्त्र्यप्रळयोऽभूदिति व्यज्यते विलीनेति ॥

**वृषगिरिपतिः** । धर्मगिरिपतिः । अवश्यं तेन धर्मसेतुना धर्माधर्मफलप्रदाननियमो न भञ्जनीयः । तथाऽपि दयाप्रेरित एवमाचरति ॥

**त्वद्विहृतिभिः** । कालानलज्वालाजालविहारहारिविशिखानां घोरक्रमा विहृतयः प्रशान्तास्त्वद्विहृतिभिरिति व्यज्यते ॥

**दिशत्येवं देवो जनितसुगतिं दण्डनविधिम्** । दण्डनविधेर्दुर्गतिजनकत्वं न्याय्यम् । निषेधचोदना दुर्गतिरूपदण्डसूचिका निषिध्यमानानुष्ठाने । न केवलं दौर्गत्याजननं निषिद्धकरणस्य; किं तु प्रभूतसुगतिजनकत्वमपीति विस्मयः ॥ ६४ ॥

**निषादानां नेता कपिकुलपतिः कापि शबरी**
**कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ।**
**अमीषां निम्नत्वं वृषगिरिपतेरुन्नमपि**
**प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि ॥ ६५ ॥**

परमं साम्यमुपैतीति परमसाम्यमुत्तमफलम् । कथमुच्चनीचयोः साम्यं संपद्येत । तदपि त्वत्प्रभावेण जाघट्यते । 'को मज्जतोरणुकुलाचलयोर्विशेषः ।' उच्चनीचयोः साम्यकरमवटतटवैषम्यरहितं दयास्रोतः । सौशील्यमुत्तमगुणः । स च नीचैः परमसाम्येन भवेत् । मुक्तौ भविष्यत्परमं साम्यमत्रैवावतीर्णेन भगवता सर्वलोकसाक्षिकं प्रदर्श्यते । सौशील्यं च केवलं

दययैवाविष्क्रियेत । परमसाम्यरूपापवर्गदशाऽङ्कुरिता भवत्यत्र सौशील्येन । 'अनघो मुक्तवदसौ' इति प्रपदनानुष्ठानेन कृतकृत्यत्वेन भक्ततुल्यत्वानुसन्धानम् ।

'यज्जातीयो यादृशो यत्स्वभावः पादच्छायां संश्रितो योऽपि कोऽपि । तज्जातीयस्तादृशस्तत्स्वभावः श्लिष्यत्येनं सुन्दरो वत्सलत्वात् ॥' इति सुन्दरबाहुस्तवश्लोकः ; 'तद्वै तथास्तु कतमोऽयमहो स्वभावो यावान्यथाविधगुणो भजते भवन्तम् । तावांस्तथाविधगुणस्तदधीनवृत्तिः संश्लिष्यसि त्वमिह तेन समानधर्मा ॥' इति श्रीवैकुण्ठस्तवश्लोकश्चात्र भाव्यौ ॥

**निषादानां नेता** । निषादस्थपतिं निषादानां नेतारमात्मयागं याजयतीव भगवान् । अत्र वैयधिकरण्येन निर्देशस्तन्नेयनिषादैरपि संश्लेषप्रदर्शनाय । तैरपि नीरन्ध्रसंश्लेषो वृत्तो यद्यप्यप्राधान्येन । चतुर्भिः सह राक्षसैराजगाम विभीषणः । निषादानामुपसर्जनत्वं संश्लेषे ॥

**कपिकुलपतिः** । चापले उपमानभूतः ॥

**काऽपि शबरी** । पूर्वोक्तौ द्वावपि पती । इयं तु या काचन वनमानुषी । रामावतारे त्रयः साम्यभाज उदाहृताः ॥

**कुचेलः** । 'दोर्भ्यां पर्यग्रहीन्मुदा' इति स्वयंग्रहो दत्तः ॥

**कुब्जा सा** । अत्र समीकरणं द्विगुणम् । प्रथमं तदङ्गवक्रिमसमीकरणम् । अनन्तरम्

'दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम्' इति नीरन्ध्रसंश्लेषः । प्रथमसमीकरणस्यापि व्यञ्जनं कुब्जेति ॥

**अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि** । प्रथमं निम्नं गच्छति दयास्रोतः । 'निम्नमिवापगाः' 'पयश्च निम्नाभिमुखम्—' इति निम्नगमनस्वाभाव्यात् । प्रभूतैः स्रोतोभिरुन्नतमप्याप्लाव्य समानयसि ॥

**त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे**
**बहन्मूर्तीरष्टौ विहरति मृडानीपरिबृढः ।**
**बिभर्ति स्वाराज्यं वृषशिखरिशृङ्गारिकरुणे**
**शुनासीरो देवासुरसमरनासीरसुभटः ॥ ६६ ॥**

निम्नानां समीकरणमुक्तम् । किं भवत्युच्चानां ब्रह्मरुद्रादीनामिति पृष्टे—उच्यते तेऽप्यनुगृह्यन्त इति ॥

**त्वया दृष्टस्तुष्टिं भजति** । त्वद्दृष्टिस्तत्तुष्टिहेतुः ॥

**परमेष्ठी निजपदे** । परमे तिष्ठतीयुक्ते परमव्योमवासग्रहणं प्रतीयेत । तद्व्यावर्त्यते निजपद इति । न परमे पदे ॥

**बहन्मूर्तीरष्टौ विहरति मृडानीपरिबृढः** । बहुमूर्तिपरिग्रहेण विहारभोगाधिक्यम् ॥

**बिभर्ति स्वाराज्यम्** । 'आप्नोति स्वाराज्यम्' 'स स्वराट् भवति' इत्युक्तमुक्तिरूपस्वाराज्यं नास्म् ॥

**वृषशिखरिशृङ्गारिकरुणे** । तुष्टिं भजति परमेष्ठी सरस्वत्या निजपदे । मृडान्या विहरति तत्पतिरीश्वरः । वृषाचलशृङ्गारी त्वत्पतिस्त्वया सह विहरतीति द्योत्यते । युक्तं त्रिभुवनकमनीयस्य शृङ्गारिणो विहरणम् ॥

**शुनासीरो देवासुरसमरनासीरसुभटः** । त्वदधीनस्तज्जयः ॥ ६६ ॥

**दये दुग्धोदन्वद्व्यतियुतसुधासिन्धुनयत-**
**स्त्वदाश्लेषान्नित्यं जनितमृतसञ्जीवनदशाः ।**
**स्वदन्ते दान्तेभ्यः श्रुतिवदनकर्पूरगुळिका**
**विषुण्वन्तश्चित्तं वृषशिखरिविश्वम्भरगुणाः ॥ ६७ ॥**

'नियच्छन्तस्तस्मिन्निरुपधिमहानन्दजलधौ'

इति न्यस्तभराः कृतकृत्या आनन्दादिगुणसिन्धौ ब्रह्मण्यात्मानं नियच्छन्तस्तमनुभवन्तः कालं नयेयुः । ब्रह्मगुणानुभावनरूपो दयोपकारो वर्ण्यते । दययैव ब्रह्मगुणाः कल्याणाश्च भवन्ति । 'एतांश्च सत्यान् कामान्' इति

दहरविद्योक्तकल्याणगुणभजनं दयां विना न सिद्ध्येत् ॥

दये दुग्धोदन्वद्व्यतियुतसुधासिन्धुनयतः । कलशोदधिसम्पदो भवत्याः' इत्यादिश्लोके दयाया दुग्धोदधित्वम् , भगवदमृतविग्रहस्य तन्मथनलब्धत्वम् ; तस्य मृतसञ्जीवनत्वञ्चोक्तम् । अत्र ब्रह्मगुणानां दयाश्लेषान्मृतसञ्जीवनरूपामृतदशाभातिरुच्यते । अत्रामृतसिन्धुर्दया । गुणाश्च दुग्धसिन्धुः । दययाऽमृतीभवन्तीतरे गुणाः ॥

त्वदाश्लेषाश्लिष्टं जनितमृतसञ्जीवनदशाः । यद्यपि त्वं सार्वभौमी , निरतिशयं तव सौशील्यम् । गुणानां मृतसञ्जीवकत्वं त्वदाश्लेषेण । यद्यपि गुणाः सिद्धा एव , तेषां मृतसञ्जीवनरूपामृतदशा त्वत्संश्लेषेण साध्यते । जनितमृत इति शब्दविरोधप्रदर्शनरूपवैचित्र्यम् ॥

श्रुतिवदनकर्पूरगुळिकाः । श्रुतिवधूजिह्वायां शिशिरशिशिरो लालारसो द्रवति कर्पूरगुळिकाभिरिव । गुणेषु कीर्त्यमानेषु तत्स्पर्शेन जिह्वा कर्पूरगुळिकास्पर्शेनेव द्रवति । 'श्रुतिकुहरकण्डूहरगिरः' इति प्राचेतसवाग्विषये पादुकायाम् । 'आदरादलोपः' इति श्रुतिवध्वा आदरदर्शनं ब्रह्मगुणवर्णने ॥

चित्तं विषुण्वन्तः । सोमाभिषव इव चित्ताभिषवः । द्रुतचित्तता सम्पद्यतेऽमृतकल्याणगुणास्वादनेन । अश्मसारमपि हृदयं द्रावयन्ति दयासंश्लिष्टा गुणाः ॥

वृषशिखरिविश्वम्भरगुणा दान्तेभ्यः स्वदन्ते । इतरविषयेभ्यो विरक्तिरपेक्ष्यते तत्र रक्त्यर्थम् । दमो मनोनिग्रहो विषयेभ्य उपरतिः । 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' ॥ ६७ ॥

जगज्जन्मस्थेमप्रळयरचनाकेलिरसिको
विमुक्त्येकद्वारं विघटितकवाटं प्रणयिनाम् ।
इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरिनाथः स्तुतिपदम् ॥ ६८॥

गुणानाममृतीभवनेन कल्याणत्वं दयाधीनमित्युक्तम् । गुणिनिष्ठगुणाभिधानं स्तुतिः । 'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते' इति विष्णुपदं विष्णुस्वरूपं स्तुवन्ति वेदाः । कथं मत्स्तुतौ प्रवृत्यते त्वया? कामं विष्णुं स्तुहि । एवमुक्ते प्रत्युच्यते--विष्णुः स्तूयेत जगज्जन्मादिकर्तेति ; अमृतस्य सेतुरिति च । तथा च जगत्सत्तादिनिर्वाहः ; मुक्तिप्रदत्वं च निमित्तद्वयं विष्णोः स्तुत्यत्वे । तदुभयं त्वदधीनं त्वदुपाधिकम् । अतो मुख्यं साक्षात् स्तुत्यत्वं तवैव । त्वद्द्वारा तस्य ॥

**जगज्जन्मस्थेमप्रळयरचनाकेळिरसिकः** । रचनाशब्दः सौत्रः । यथा चेतनस्यैव रचनासम्भवः ; तथा दयालोरेव रचना सम्भवतीति भावः । प्रकृतिमात्रस्य चैतन्यशून्यस्य यथारचनानुपपत्तिस्तथा दयाराहितस्येश्वरस्यापि रचनानुपपत्तिरिति भावः ॥

**विमुक्त्येकद्वारं विघटितकवाटं प्रणयिनाम्** । नान्यः पन्था इति त्वामेवैकं पन्थानं निगदति निगमः । पन्था दवीयान् भवेत् । अध्वगमनपरिश्रममप्यपहाय तमेव प्राप्यमपावृतकवाटं मुक्तिद्वारं करोति दयेत्युल्लेखः । स्वर्गद्वारमपावृतमित्युक्तिरनुस्रियते । प्रणयमात्रेण कवाटविघटनम् । 'तमेवं विद्वान्—' इति विदिना प्रणयात्मकं ज्ञानमुच्यते । मुक्तिद्वारकवाटिकाविघटनध्वानप्रतिश्रुन्निभत्वमुक्तं भगवन्मन्त्राणां सङ्कल्पसूर्योदये । मुक्तिद्वारकवाटिकाविघटनकुञ्चिकायमानत्वमुक्तं भगवच्चरणस्याभिनवभट्टबाणेन ॥

**इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे** । त्वदधीनमेतदुभयम् । अतस्त्वदुपाधिकं भगवतः स्तुत्यत्वम् ॥

**विशुद्धानां वाचां वृषशिखरिनाथः स्तुतिपदम्** । अशुद्धा लौकिकबन्दिनो गुणराहितं मिथ्या स्तुवीरन् । विशुद्धा निगमवन्दिनो न निर्दयं विषमं पुरुषं पूर्णत्वेन स्तुवीरन् ॥ ६८ ॥

**कलिक्षोभोन्मीलत्क्षितिकलुषकूलङ्कषजवै-**
**रनुच्छेदैरेतैरवटतटवैषम्यरहितैः ।**

**प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे**
**विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगुणाः ॥ ६९ ॥**

'वृषगिरिकटकेषु व्यञ्जयस्सु प्रतीतैर्मधुमथनदये त्वां वारिधाराविशेषैः' इति गिरिनिर्झराणां दयाप्रवाहत्वं निरूपितम् । समानधर्मनिरूपणेनोपमायाः पूर्णतोपपाद्यतेऽत्र ॥

**कलिक्षोभोन्मीलत्क्षितिकलुषकूलङ्कषजवैः** । झटित्यतिजवेन पापनाशकत्वम् ।

**अनुच्छेदैः** । अविच्छिन्नैः ।

**अवटतटवैषम्यरहितैस्ते प्रवाहैः** । उच्चनीचभेदराहित्यैर्दया-प्रवाहैः ।

**पद्मासहचरपरिष्कारिणि कृपे** । विद्युत्सहितमेघस्य वर्षुकत्व-सम्पादनेनेव परिष्कारिका पूर्णत्वप्रदा करुणा ॥

**वृषशिखरिणो निर्झरगुणाः** । आकाशगङ्गादिनिर्झराणां शैत्य-नैर्मल्यादिगुणाः ॥

**विकल्पन्ते** । तुल्या भवन्ति फलैक्यादेकार्थत्वात् । तुल्ययोर्विकल्पः । अविशिष्टफलयोरेकार्थयोस्तुल्ययोर्विकल्प इति शास्त्रज्ञानां व्यवहारः । सादृश्ये विकल्पपदप्रयोगः । अकूपारैरेकोदकसमयवैतण्डिकजवैरनिर्वाप्याऽविद्यावडवा दयाप्रवाहनिर्झरैर्निर्वाप्यत इति दशकप्रथमश्लोकोक्तसमर्थने-नोपसंह्रियत इत्यवधेयम् । निर्भयत्वलम्भकत्वं दशककार्यम् ॥ ९६ ॥

**खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं**
**कृपे सिह्लक्ष्माभृत्कृतमुखचमत्कारकरणम् ।**
**भरन्यासच्छन्नप्रबलवृजिनप्राभृतभृतां**
**प्रतिप्रस्थानं ते श्रुतिनगरशृङ्गाटकजुषः ॥ ७० ॥**

निर्भरत्वोपपादनेन दशकोपसंहारः । 'एतं ह वा व न तपति किमहं साधु नाकरवं किमहं पापमकरवमिति' । 'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।'

'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' । भरन्यासच्छद्मना गरीयान् पापभारो न्यस्यते दयायां पापिष्ठजनैः । गुरवे दक्षिणा देया । दयायै गुर्वी गुरुदक्षिणा दीयते । बह्वन्नं दीयते तस्यै । श्रुतिनगरचतुष्पथे स्थिता दया । प्राभृतं प्रतिग्रहीष्यन्ती प्रपत्तॄन् प्रति प्रतिष्ठते । आदरसंभ्रमाभ्यामभ्युद्गच्छति दया । यद्यप्ययं पापिष्ठोऽभूत्; तदनन्तप्रबलपापं प्रपदनक्षण एव विस्मृत्य तदुपहृतपापभारस्यातिगरीयस्त्वमजानतीव प्रपन्नं प्रत्युद्गच्छत्युपहृतं प्रतिग्रहीतुम् । येन धनेन धनवन्तो जनास्तद्धनमुपहरेयुर्गुरुजनाय; राज्ञ्यै च । पापमेव धनं पापाढ्यानां प्रपत्तॄणाम् । तदेव तैरुपह्रियते । प्रपत्तृपापराशिविषये खिलं भवति भगवच्चेतसि । सर्वं विस्मर्यते । महति स्मृतिभ्रंशरूपखिले जाते तत्पश्यन्नित्यमुक्तभुवनं विस्मयाविष्टं भवति ॥

**भरन्यासच्छद्मप्रबलवृजिनप्राभृतभृताम्** । देवी राज्ञी सार्वभौमी दया । तस्यै प्रभूत उपहारो वस्त्रादिभिरावृतो दीयेत । भरन्यासच्छद्मना वृतो गुरुतरपापभार उपाह्रियते । भारस्य भूयस्त्वं छद्मना व्रियत इव प्रपत्त्रा ॥

**श्रुतिनगरशृङ्गाटकजुषस्ते प्रतिप्रस्थानम्** । श्रुतिनगरचतुष्पथमध्ये त्वं स्थिता । 'चतुर्विधा भजन्ते माम्---' इति प्रपत्तृचातुर्विध्यम् । चतुर्विधपुरुषार्थार्थित्वेन वा ॥

**प्रतिप्रस्थानं ते** । आयान्तं क्षिप्रमादरेण प्रत्युद्गच्छसि त्वम् । यद्यपि पुरा दुराचारः, सर्वाशी, कृतघ्नो नास्तिकोऽभूदयं जनः ॥

**खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनम्** । महान् भ्रंशो भवति चेतसि दयाया भगवतश्च । पापविषये शून्यमिव भवति मनः । न स्मरत्यपराधानां शतमपि । प्रपत्तुरपराधसहस्रभाजनत्वम्, तत्प्रयुक्ततीव्रनिग्रहसङ्कल्पश्च भगवच्चेतसो भ्रश्यतः । सर्वज्ञस्य चेतोवृत्तौ महत्खिलं जायतेऽनाद्यनन्तप्रबलापराधविस्मरणेन । 'कथां प्रमत्तः प्रथमं कृतामिव' इतिवद्भवति । एतत्पश्यन्तो नित्यमुक्तादयः, श्रुतयश्चाश्चर्यरसाविष्टा विस्मेरा

भवन्ति । भवतीति भुवनम् । नित्यमुक्ता ब्रह्मविदो ब्रह्मानुभवपरायणाः सन्तो भवन्तः । नित्यमुक्तादयो भगवच्चेतोवृत्तिम् ; दयाचेतोवृत्तिं चाध्यक्षयन्ति । तत्रोत्पद्यमानां खिलरूपशून्यतां च पश्यन्ति । अपराधिचक्रवर्तिविषये समस्तप्रबलापराधान्विस्मृत्य भरन्यासच्छद्मना प्रबलवृजिनसञ्चयमावृण्वन्तं प्रपत्तृजनं प्रति तव तद्भाराङ्गीकाराऽऽतिऋजुतया प्रतिप्रस्थानं वीक्ष्य सूरयः केयं विचित्रा विस्मृतिरिति विस्मयेनाविश्यन्ते । तव प्रतिप्रस्थानं विस्मेरसूरिवृन्दविशिष्टम् । विस्मेरभुवनमिति बहुव्रीहिः। किमिदमित्याश्चर्यरसः । यथा प्राचेतसस्य किमिदं व्याहृतं मयेति वदतः; यथा च भगवतः 'स्वयञ्जहार किमिदमिति पृथुकतण्डुलान्' इति कुचेलचेलखण्डबद्धपृथुकतण्डुलोपहारदर्शने ॥

सिह्मक्ष्माभृत्कृतमुखचमत्कारकरणम् । तिष्ठन्त्वाविर्भूतस्वरूपा मुक्ताः, कर्माभावादनादेर्नित्याविर्भूतस्वरूपगुणादयो नित्याश्च । ब्रह्माधीनज्ञानास्ते । किं भवति विपाश्चितो ब्रह्मण उन्नतगिरिशिखरात्सर्वं पश्यतः ? सोऽपि विस्मयाविष्टो भवति स्वचेतसि खिले जायमाने । महांश्चमत्कारोऽनुभूयते तेन, केयं दयादेवीक्रीडेति । प्रपत्तृचेतस्यापि महात्खिलं भवतीव । पापवासनाभारोऽपहीयते । अपनीतपापवासनाभारं लघु भवति प्रपत्तृचेतः । सिह्मक्ष्माभृदिति सिह्मराजस्यापि सूचनम् । सिह्मः क्रूरः । तद्राजः क्रूरतमः । सोऽपि विस्माय्यते । कृतमुखो विद्वान् ॥ ७० ॥

विविधचेदाचेत्सत्तास्थमप्रवृत्तिनयामिका
वृषगिरिविभोरिच्छा सा त्वं परैरपराहता ।
कृपणभरभृत्किंकुर्वाणप्रभूतगुणान्तरा
वहसि करुणे वैचक्षण्यं मदीक्षणसाहसे ॥ ७१ ॥

'निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः' इति भरन्यासरूपोपायप्रवृत्तिजनकोऽपि भगवान् दयाद्वारा । न केवलं प्रपदनकाले भरस्वीकारः क्रियते दयया । तत्पूर्वं सर्वा तदर्थक्षपिस्तयैव क्रियते । 'हितमिति जग-

दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरैरमतिविहितैरन्यैर्धर्मार्यितैश्च यदृच्छया' इति श्लोके इदं स्पष्टमुच्यते । दयया कृतस्य सर्वोपकारस्य स्मरणमस्मिन् दशके । कृतस्यास्मरणं कृतघ्नताऽऽपद्यते । यद्यपि पुरा कृतघ्नोऽभूदिदानीमकृतघ्नेन भाव्यम् । चातकवदैकान्त्यमावश्यकं कमलाकान्तकारुण्ये । दयास्वभावः, तदुपकारपरम्परा च स्मर्येते । दयास्वभावानुसन्धानेन भयनिवृत्तिरीप्स्यते । वृत्तं चात्र हरिणी । 'चकितहरिणीप्रेक्षणा निम्ननाभिः' इति मेघे कालिदासः । 'त्रस्तैकहायनकुरङ्गविलोलदृष्टिः' इति सीताविषये भवभूतिः । कोमलमार्दवैकान्ता दया चकितहरिणप्रेक्षणा । सा मां त्रातुं भीषणातिक्रूरपापिष्ठमदीक्षणसाहसे वैचक्षण्यं वहतीत्याश्चर्यम् । प्रशाम्यदपत्रपा निजमभिप्रेतं नः स्वयं प्रदिशति । वीतातङ्का वृषाद्रिपतेः पदं वितरति । त्रपा, आतङ्क इत्यादयो हरिणीगुणाः । यद्यपि ते हरिण्युपमितदयायां प्रसक्ताः ; ते त्यज्यन्तेऽस्मभ्यं निरातङ्कत्वादिकं दातुम् । प्रथमश्लोके दयायाः स्वरूपं, 'विष्णोः कटाक्ष'मिति प्रथमं रिरक्षिषितचेतने स्वयं तद्दृष्टिपातश्च कथ्येते ॥

त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका । 'स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं' इति भगवत्युक्तं दयायामद्वारकं; दयायां मुख्यमन्वेति । इदञ्च विस्तरेणोपपादितमस्मिंस्तोत्रे ॥

वृषगिरिविभोरिच्छा सा त्वम् । भगवतश्चेतनरक्षणेच्छा दया । तस्माद्भगवदीयत्वेनोक्तस्य जन्मादिकारणत्वलक्षणस्य नातिव्याप्त्यव्याप्त्यसंभवाः । दयारूपेच्छाविशिष्टो भगवान् जगज्जन्मादिकारणमिति निष्कर्षः ॥

परैरपराहता । समर्थया भवितव्यं रक्षणेच्छया दयया । दण्डनप्रवृत्तक्रोधादिभिर्यदि साऽभिभूयेत नास्मदिष्टलाभसम्भवः । इयं गुणेषु सार्वभौमी । नास्या सार्वभौम्या गुणान्तरैरभिभवप्रसक्तिः ॥

कृपणभरभृत्किङ्कुर्वाणप्रभूतगुणान्तरा । सार्वज्ञ्यादिगुणानां दयानभिभावकत्वमुक्तम् । न तावताऽलम् । सर्वेषां गुणानां साम्ये न जितं स्याद्दयया । गुणान्तराणां तस्याः किङ्करत्वमुच्यते । पूर्वोक्तं सर्वं

संगृह्यतेऽत्र दयास्वरूपलक्षणकथनमुखेन ॥

**करुणे मदीक्षणसाहसे वैचक्षण्यं वहसि** । करुणे इति हरिणीसदृशेक्षणवत्त्वं व्यज्यते । अतिविभीषणमदीक्षणसाहसे विचक्षणा भवसि । भीषणे पापिष्ठे त्वद्भर्तृप्रतियोद्धृप्रधानप्रतिमल्लेऽपराधचक्रवर्तिनि मयि कुरङ्ग-नयनया त्वया कटाक्षनिवेशनं महत् साहसम् । वहसीति, प्रपत्तृजनन्यस्त-महाभरवहनमपि तव न भारः । प्रथमं मयि क्रूरे दृष्टिनिवेशनमेवातिभार इति व्यज्यते । विभीषणानामीक्षणसाहसे तव वैचक्षण्यम् । राक्षस इति न त्वं बिभेषि ॥ ७१ ॥

**वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी**
**क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ।**
**भुवनजननी पुंसां भोगापवर्गविधायिनी**
**वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥ ७२ ॥**

दयास्तुतिः कुतो भवता । चेतनाः खलु स्तूयेरन् । न गुणानां चैतन्यम् । यद्यप्यहं गुणेषु सार्वभौमी , नाहं चेतना ।

'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु'

इति चेतनाचेतनविभागापरिज्ञानेनाचेतनस्य चेतनवत्सम्बोधनमुन्मत्तकृत्यम् ।

'गाढोन्मादः प्रणयपदवीं प्राप वार्तानभिज्ञे'

इत्यचेतनसंभाषणं गाढोन्मादप्रयुक्तमिति कविसार्वभौमः । इदं भवताऽभ्युपगतं हंससन्देशे

'विश्लेषेण क्षुभितमनसां मेघशैलद्रुमादौ
याच्ञादैन्यं भवति किमुत क्वापि संवेदनार्हे'

इति । यद्यपि सम्यग्गीयते भवता मद्विषये , उन्मत्तगीतमेवेदं भवेत् । एवमाक्षिप्ते—प्रत्युच्यते । अचेतने चेतनसमाध्यारोपणं कविसमयः । स्तोत्रारम्भ एवोक्तं श्रीविषये 'करुणामिव रूपिणीम्' इति । श्रीरेव त्वम् । अतो नाचेतनत्वशङ्का । दयालक्ष्म्योरभेद उच्यतेऽस्मिन् श्लोके ॥

**वृषगिरिपतेर्हृद्या** । तद्वक्षःस्थलावस्थिता । हृदयमिच्छाभूतदयायाः स्थानम् ॥

**विश्वावतारसहायिनी** । दयाऽवतारनिमित्तम् । अवतारेषु प्रिया, सहचरी च । अवतारेषु विष्णोः श्रीरनपायिनी ॥

**क्षपितनिखिलावद्या** । बहिष्कृतनिग्रहा दया, नित्यमज्ञातनिग्रहा लक्ष्मीः । सर्वपापापनोदिनी ॥

**क्ष्मादिनिषेविता** । क्षमादिगुणास्तवोपकुर्वन्त्यसद्रक्षणे । पृथिव्यादिनिषेविता लक्ष्मीः । क्षमादिनिर्वर्त्यमाना उपकारा उक्ताः प्रथमदशके ॥

**भुवनजननी** । समस्तजननी सा । भुवनसृष्टिस्त्वया कार्यते ॥

**पुंसां भोगापवर्गविधायिनी** । पुंसां पुरुषार्थार्थिनाम् ।

'श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित् ।'

न दयां विना कस्यापि पुरुषार्थस्य लाभः ॥

**वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम्** । 'वितमसि पदे लक्ष्मीकान्तम्' 'श्रिया सार्धं जगत्पतिः' इत्यादिकं भाव्यम् । स्वयं व्यक्तिर्दयास्वभावः ॥ ७२ ॥

**स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभालया**
**विविधविभवव्यूहावासाः परं च पदं विभोः ।**
**वृषगिरिमुखेष्वेतेष्विच्छावधिप्रतिलब्धये**
**दृढविनिहिता निःश्रेणिस्त्वं दये निजपर्वभिः ॥ ७३ ॥**

परव्यूहविभवहार्दार्चारूपेण रक्षकस्य विविधावस्थितिस्त्वदनुभावनिघ्ना । त्वमेव पर्वभेदैर्युक्ता दृढा निःश्रेणिः । दिव्यक्षेत्रवासलम्भनं दयाकार्यम् । तेन चोपायान्वयप्राप्तिः । दये स्वयमिति परमपदे स्वयं व्यक्तिरुक्ता पूर्वश्लोकान्ते । अत्र दिव्यक्षेत्रादिषु स्वयंव्यक्तिर्वर्ण्यते ॥

**स्वयमुदयिनः** । स्वयमिति पूर्वश्लोकान्ते । स्वयमित्यस्य श्लोक-

स्वोपक्रमेऽन्तादिक्रमेणेव स्वयं भवति । स्वयं करुणया व्यक्तिं गतानि स्वयंव्यक्तभगवद्रूपाणि ॥

**सिद्धाद्याविष्कृताश्च शुभालयाः** । भक्तविशेषप्रार्थनानुरोधेन प्रकाशिताः । तेऽपि प्रकाश्यन्ते , न जन्यन्ते । पूर्वसिद्धास्त इत्यपि द्योत्यते । सिद्धस्याविष्करणमात्रम् ॥

**विभोर्विविधविभवव्यूहावासाः** । विभुत्वाद्विविधभवनम् । विविधं भवतीति विभुर्विष्णुः । आवास इति हृदयगुहावासस्य हार्दस्य ग्रहणं स्यात् । 'स्थित्यदनाभ्यां च' इति हृदये वासमात्रं तस्य । न सम्भोगप्राप्तिस्तस्य , वैशेष्यात् ॥

**वृषगिरिमुखेष्वेतेषु** । बहुपर्वविशिष्टनिःश्रेणित्वम् वृषगिरौ दृश्यते ॥

**इच्छावधिप्रतिलब्धये** । मनोरथकाष्ठालाभाय ॥

**दृढविनिहिता निःश्रेणिस्त्वं निजपर्वभिः** । दयापर्वाणि परव्यूहविभवादयः ; लोकानुग्रहार्थमेता व्यक्तयः । अदृढनिःश्रेणिकान्तरारोहो ध्रुवं सापायः । अज्ञातयादृच्छिकप्रासङ्गिकसुकृतव्याजमुपधीकृत्य कटाक्षादिदयापर्वाण्यैश्वर्यकैवल्यादिफलवितरणरूपदयापर्वाणि चानुपदमेव वर्ण्यन्ते । 'निरतिशयप्रीतिरूपतया भक्तिशब्दाभिलप्योऽसकृदावृत्तप्रयाणानुवृत्तो निरन्तरस्मृतिसन्तान एव निःश्रेयसनिःश्रेणिकेति निरणायि ' इति निक्षेपरक्षायाम् । भक्तिभारं वहन्ती दयानिःश्रेणिः । ' निष्प्रत्यूहषडङ्गयोगनिगमप्रासादनिःश्रेणिका ' इति प्रपत्तिप्रतिपादकनिक्षेपरक्षाग्रन्थस्य निःश्रेणिकात्वमुक्तं तद्ग्रन्थान्ते ॥ ७३ ॥

**हितमिति जगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरै-**
**रमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।**
**परिणतबहुच्छद्मा पद्मासहायदये स्वयं**
**प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥ ७४ ॥**

पापिष्ठमदीक्षणं साहसमित्युक्तम् । तिष्ठतु साहसम् । लज्जा प्रथमं भूषणं

नारीणाम् । कथमयोग्ये निर्लज्जं दृष्टिपातः । लज्जावहत्वनिवृत्तये त्वमेवालक्षितमज्ञातसुकृतादिव्याजान्कारयित्वा तानुदाहरसि मद्योग्यतानिरूपकत्वेन । त्वयैव गूढं कारितान् योग्यताव्याजान् ससाक्षिकयन्ती त्वं लज्जास्पदत्वं परिहरसीव । मदर्थे एतावान् क्लेशस्तव ॥

**पद्मासहायदये जगदृष्ट्या हितमिति कल्पितैः** । प्रासङ्गिकसुकृतैः ।

**अकल्पितफलान्तरैः** । आनुषङ्गिकसुकृतैः ॥

**अमतिविहितैः** । अबुद्धिपूर्वसुकृतैः ॥

**यदृच्छया धर्मायितैः** । यादृच्छिकसुकृतैः ॥

**अन्यैः** । सामान्यबुद्धिमूलादिसुकृतविशेषैः ॥

**परिणतबहुच्छद्मा** । भरन्यासच्छद्मप्रबलवृजिनप्राभृनभृतामिति मच्छद्मोक्तम् । तदपि त्वत्कारितमेव । छद्मपरम्परा अभ्यस्यते भवत्या मदर्थे ॥

**स्वयं प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा** । स्वयं निजेति पदाभ्यां न मम मुमुक्षा, मन्मोचनेच्छा तवैवेति व्यज्यते । अनेकैश्छद्मभिर्लज्जापनयनम् ॥ ७४ ॥

**अतिविधिशिवैरैश्वर्यात्मानुभूतिरसैर्जना-**
**नहृदयमिहोपच्छन्द्यैषामसङ्गदशार्थिनी ।**
**तृषितजनतातीर्थस्नानक्रमक्षपितैनसां**
**वितरसि दये वीतातङ्का वृषाद्रिपतेः पदम् ॥ ७५ ॥**

न वयं दयामुपच्छन्दयेम । सैव फलान्तरप्राप्तिप्रदर्शनमुखेनास्माकमुपच्छन्द्यानन्दघनभगवत्सन्निधिमानाय्य भगवति रुचिमितरत्रारुचिं च क्रमश उत्पाद्य वीतातङ्का भगवत्पदं ददाति ॥

**अतिविधिशिवैरात्मानुभूतिरसैः** । मोक्षव्यतिरिक्तैरलभ्योत्तमफलान्तरैः । तानि प्रदाय ॥

**जनान्** । जनमात्राधिकारं दयाश्रयणम् ॥

**अहृदयमिहोपच्छन्द्य**। विचित्ररसं फलं ददामीति प्रलोभ्य। इहेति वृषगिरिं प्रापय्य। मुष्णातीतिवदहृदयत्वकथनम्। फलसङ्गिनां जनानां विचित्राणि फलानि प्रदर्श्य तत्प्राप्त्यर्थं तान्भगवत्पदमानीय ॥

**असङ्गदशार्थिनी**। सङ्गमेवाहमर्थये। त्वं तु मदसङ्गदशार्थिनी ॥

**तृषितजनतातीर्थस्नानक्रमक्षपितैनसाम्**। पिपासार्ता जनाः पुण्यतीर्थे स्नान्ति तृष्णिवृत्तये, न नैर्मल्यप्रेप्सया। अनिच्छन्त एव शुद्धिं लभन्ते। निदाघार्तास्तत्र स्नान्ति। तेन चैनो निवर्तते। एवंरीत्या त्वत्प्रवृत्तिर्भगवद्दिव्यमङ्गळविग्रहसंदर्शनेन जनानामेनःक्षपणे। क्षपिते एनसि सत्त्वोन्मेषः ॥

**वितरसि दये वीतातङ्का वृषाद्रिपतेः पदम्**। अशुद्धानां मलिनानां चेतनानां पतिपदस्पर्शलम्भेन आतङ्कः स्याद्दयितायाः। असङ्गेभ्यो विरजोभ्यः पतिपदवितरणं न्याय्यम्। तेषां विशुद्धिं क्रमेणोत्पाद्यानन्तरं निर्विशङ्का तद्वितरसि। अत्रापि दयोपकारपर्वप्रदर्शनम् ॥ ७५ ॥

**वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया**
**भवभयपरीतापच्छित्त्यै भजन्नघमर्षणम्।**
**मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते**
**स्वयमुपनतैः स्वात्मानन्दप्रभृत्यनुबन्धिभिः ॥ ७६ ॥**

भवसिन्धुतरणभरस्त्वयि मया न्यस्तः। त्वं च मां वृषगिरिसुधासिन्धौ न्यस्यसि। 'अभिलषितदुरापा ये पुरा कामभोगा जलधिमिव जलौघास्ते विशन्ति स्वयं नः' इत्युक्तरीत्या सर्वे भोगा मां स्वयं प्रविशन्ति ॥

**वृषगिरिसुधासिन्धौ**। अमृतस्य सेतुरेवामृतस्य सिन्धुरपि भवति।

**जन्तुः**। सर्वाधिकारत्वं द्योत्यते ॥

**दये निहितस्त्वया**। हृदयगुहानिहित आनन्दमय इति श्रूयते। असद्धृदयावाश्रितोऽपि सोऽस्माभिरविदितः; अस्माकमनृतेन प्रत्यूढत्वात्। अहं तस्मिन्नानन्दसिन्धौ त्वया न्यस्ये ॥

**भवभयपरीतापच्छित्यै भजन्नघमर्षणम्** । सिन्धौ न्यसने तत्क्षणात्सर्वाघमर्षणम् , सर्वतापापगमश्च भवति । ग्रीष्मे शीत इव ह्रदो ब्रह्म खलु प्रविश्यते ॥

**मुषितकलुषः** । 'तदैव मुञ्चात्यशुभान्यशेषतः' इतिवन्मत्कलुषचौर्यं क्रियते मद्विदितम् । अघजिहीर्षा विदिता चेत् दस्युभिर्मुषितमिति भृशमाक्रन्देयम् ॥

**मुक्तेरग्रेसरैः स्वयमुपनतैः स्वात्मानन्दप्रभृत्यनुबन्धिभिः** । अनिच्छतोऽपि मम स्वयमुपनताः । स्वात्मानन्दः, स्वस्यात्मभूतस्य परमात्मनोऽनुभवरूपानन्दो वा । स्वस्वरूपानन्दो वा स्यात् । उत्तरकल्पे पूर्वः प्रभृतिशब्देन ग्राह्यः ॥

**अभिपूर्यते** । समन्तादाविश्यते ॥ ७६ ॥

**अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे**
**कृतविदनघा विच्छिद्यैषां कृपे यमवश्यताम् ।**
**प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं**
**प्रतिविधिमुपाधत्से सार्धं वृषाद्रिहितैषिणा ॥ ७७ ॥**

प्रपदनं कारयित्वा तदनन्तरमपि रक्षा त्वयैव क्रियत इत्युच्यते ॥

**अनितरजुषाम्** । प्रयोजनान्तरदेवतान्तरविमुखानाम् ॥

**अन्तर्मूलेऽप्यपायपरिप्लवे** । आज्ञाच्छेदोऽपायः । अबुद्धिपूर्वकमघं न श्लिष्येत् । अन्तरित्यन्तःकरणम् । तन्मूले बुद्धिपूर्वके । अपायपरिप्लवेऽपराधान्तरसम्पाते ॥

**कृतवित्** । कृतप्रपदनवित् । ममाहृदयक्षणिकाक्रान्दनरूपप्रपदनम् 'ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ' इति बहुमन्यमाना ॥

**अनघा** । निजिघृक्षारूपदोषरहिता ॥

**उच्छिद्यैषां यमवश्यताम्** । 'न खलु भागवता यमविषयं गच्छन्तीति ' प्रमाणमनुसृत्य ॥

**प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितम्** । अभ्युपगतप्रारब्धक्षपणे सङ्कल्पितमोक्षप्रत्यादेशप्रसङ्गं निवर्तयितुं पुनः प्रपदनादिप्रतिविधिं कारयसि । मोक्षदानसङ्कल्पस्यामोघीकरणं तवैव भरो भवति

**प्रतिविधिमुपाधत्से सार्धं वृषाद्रिहितैषिणा** । प्रतिविधिः प्रतिविधानम् , प्रायश्चित्तम् । भगवतोऽप्राधान्यद्योतनं सार्धशब्देन , तृतीयया च ॥ ७७ ॥

**क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते**
**सुरपितृगणे निर्वेशात् प्रागपि प्रळयं गते ।**
**अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां**
**प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम्** ॥ ७८ ॥

पापक्षपणाय पुनः प्रपदनरूपप्रतिविधानं त्वयाधीयत इत्युक्तम् । सुकृतस्य त्वमेव प्रतिभूर्भवसीत्युच्यते । यज्ञादिकर्मभिराराधितानां देवपितॄणां प्रळये नष्टत्वेऽपि त्वं प्रतिभूर्भूत्वा तदाराधनानुगुणं फलं ददासि । इत्थं पुण्यविषये कृतवित्त्वस्योपपादनम् । प्रळयकालेऽपि दयाया अनुवर्तमानत्वमुच्यते ॥

**क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते सुरपितृगणे** । क्षणविलयिनः शास्त्रार्थभूतयज्ञादयः । त्वं प्रळयेऽपि न विलीयस इति व्यतिरेको व्यज्यते । क्रियासु क्षणमात्रे विलीनास्वपि क्रियाराध्याः स्थायिनो देवाः सन्ति ; ये फलं दद्युः । तदधिकारे ते निवेशिताः । देवतासु सतीषु नापूर्वकल्पननिर्बन्ध इति द्योत्यते ॥

**निर्वेशात्प्रागपि प्रलयं गते** । कृतकर्मफलभोगात्प्राक्प्रलय आपतितः । प्रलये पितृसुरगणाः सर्वेऽपि प्रलीनाः ॥

**अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम्** । न कालकाल्यत्वं दयायाः । कालवशंवदाः प्रतिभुवो देवादयः । त्वं तद्विलक्षणा प्रतिभूः ॥ ७८ ॥

**त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा**
**वितरति निजं पादाम्भोजं वृषाचलशेखरः ।**
**तदिह करुणे तत्तत्क्रीडातरङ्गपरम्परा-**
**तरतमतया जुष्टायास्ते दुरत्ययतां विदुः ॥ ७९ ॥**

'मम माया दुरत्यया' इति मायाया दुरत्ययत्वमुक्तम् । दयाया दुरत्ययताभावे कथं दयाप्रपदनेन दुरत्ययमायातरणसंभवः ? तत्संभवाय दयाया दुरत्ययतोच्यते । दयायां विश्वासकाष्ठा च प्रदर्श्यते ॥

**त्वदुपसदनात्** । त्वत्प्रपत्तेः ॥

**अद्य श्वो वा महाप्रलयेऽपि वा** । 'अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः' 'जातस्य हि ध्रुवो मृत्युः' इति च यथा मरणं निश्चितम् , तथा प्रपन्नाय भगवत्पादाम्भोजवितरणं निश्चितमिति व्यज्यतेऽद्य वेति वचनसारणेन । एवं च फलनिश्चयदार्ढ्यम् ॥ ७९ ॥

**प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ**
**प्रसृमरसुधाधाराकारा प्रसीदति भावना ।**
**दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं**
**निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ ८० ॥**

विलम्बेन भगवत्प्राप्तिरुक्ता । उत्तरावसंभवोऽप्युक्तस्तत्पूर्वम् । जीवितदशया परिमितरसया न भाव्यम् । विपुलं भजनसुखमपेक्ष्येत । वाञ्छितं चेत्तदपि दीयते दययेत्युच्यते । प्रपन्ना यथा दयाप्रपन्नास्तथा भक्ता दयाभक्ता इत्युप्युच्यते । भक्तिसिद्धिरपि दयाधीना । अष्टमदशकान्तेऽष्टाङ्गफलभूतसमाधिसिद्धिरुच्यत इति रसिकैर्भाव्यम् ॥

**त्वत्संपृक्ते वृषाद्रिशिखामणौ** । वागर्थाविव संपृक्ताविति पार्वतीपरमेश्वरयोर्नित्ययोगः ; संश्लेष दर्शनीयतमत्वं च द्योतितं महाकविना । त्वत्संपृक्तः श्रीनिवासोऽत्यर्थप्रियत्वरूपभक्तियोगविषयो भवतीत्युच्यते ॥

**प्रणिहितधियाम्** । प्रणिधानं ध्यानम् । तद्वताम् ॥

**प्रसृमरसुधाधाराकारा प्रसीदति भावना।** अनुभवानुरूपो वर्णनप्रकारः। उत्तरार्धे प्रपन्नानां मोक्षानन्दस्य प्रतीक्षणमुच्यते ॥

**निभृतगरुतस्ते।** निश्चलपक्षाः। प्रयत्ननिश्चलान्तःकरणाः। गरुत्मत्साम्यं द्योत्यते ॥

**इति दत्तास्वादम्।** एवं मनस इतरवैमुख्यस्य स्वस्वादनरसस्य दायिनम् ॥

**विमुक्तिवलाहकम्।** वृषशिखरिमाश्रितो मोक्षमेघः श्रीनिवासः। धर्ममेघः समाधिरिति योगिनः। समाधिविषयः समाधिफलमयं विमुक्तिमेघः ॥

**स्थिराशयचातकाः।** एकात्मानश्चातकाः ॥

**दृढम्।** निस्संशयम् ॥

**निध्यायन्ति।** प्रतीक्षन्ते ॥ ८० ॥

**कृपे विगतवेलया कृतसमग्रपोषैस्त्वया**
**कलिज्वलनदुर्गते जगति कालमेघायितम्।**
**वृषक्षितिधरादिषु स्थितिपदेषु सानुप्लवैः**
**वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः॥ ८१ ॥**

स्थिराशयचातका इति चातकप्रस्तावः कृतः। अवग्रहश्चातकशत्रुः। अवग्रहव्यपगमोऽपेक्ष्यते। भगवद्विग्रहैरवग्रहो व्यपोह्यते। ग्रहोऽवग्रहः; विगतावग्रहो विग्रह इति वैचित्र्यमभिप्रेयते व्यपगतावग्रहैर्विग्रहैरिति। 'गुरुतरकरुणाभारखिन्नाशयास्ते' इति श्रीशंकराचार्या हरिपादादिकेशान्तस्तोत्रे। मेघो भगवान्यदा करुणाभारभरितो भवति, तदा स्वपदाद्गिरिशिखरमवतीर्योर्व्यां हितममृतं वर्षति। करुणाकारिता अवताराः। दयाधीना भगवदवतारा अवश्यं दयाशतके वर्णनीयाः। प्रथमं श्रीनिवासत्वेन दयया सह वृषगिरावयतीर्य ततः पृथिव्यां दशधावतरतीत्युल्लेखः 'सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे' इति वर्णनरीतिरनुस्त्रियते। पृथिव्या-

मवतरणं पृथिवीवृत्तेन वर्ण्यत इति रसिकमनोरञ्जनम् । पृथिव्यर्थं प्रायेणावतारवृत्तम् ॥

**कृपे विधृतलोकया।** लोकविधारणं कृपया 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥' इत्यवाप्तसर्वकामस्य निस्पृहस्य भगवतो लोकोत्सादभिया केवलं कृपया जगद्धारणे प्रवृत्तिः ॥

**कृतसमग्रपोषैस्त्वया** । न केवलं धारणम् । समग्रपोषणमपि त्वयैव ॥

**कलिज्वलनदुर्गते जगति कालमेघायतम्** । कलौ वेङ्कटनायकः ॥ कलिज्वलननिर्वापणं वेङ्कटगिरिशिखरस्थकृष्णमेघेनैव शक्यम् ॥ ८१ ॥

**प्रसूय विविधं जगत्तदभिवृद्धये त्वं दये**
**समीक्षणविचिन्तनप्रभृतिभिः स्वयं तादृशैः ।**
**विचित्रगुणचित्रितां विविधदोषवैदेशिकीं**
**वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥ ८२ ॥**

विधृतलोकयेति लोकविधारणमुक्तम् । अत्र जगन्मातृत्वमुच्यते । दयया विविधं जगदसोष्ट । जगत्प्रसवात् पूर्वमीक्षणम् , ध्यानं च विश्वस्रष्ट्रा क्रियमाणं श्रूयते । प्रसवानन्तरं माता दययेक्षणध्यानादिभिः प्रजापोषणं क्रियत इत्युच्यते । अवतारेषु दयाकृतोपकाराः प्रस्तूयन्ते । मत्स्यकूर्मावतारावत्र संगृह्येते ॥

**प्रसूय विविधं जगत्तदभिवृद्धये।** प्रसूयेति मातृत्वं द्योत्यते । जगतोऽभिवृद्धिरपहृतवेदप्रतिलम्भनेन ; लक्ष्मीप्रादुर्भावेन च ॥

**तादृशैः समीक्षणचिन्तनप्रभृतिभिः** । मत्स्यैरीक्षणेन प्रजावर्धनम् ; कूर्मैश्च ध्यानेन । 'ईक्षणध्यानसंस्पर्शैर्मत्स्यकूर्मविहङ्गमाः ।' इति सङ्कल्पसूर्योदये । प्रभृतिशब्देन संस्पर्शस्य ग्रहणम् । एवं च हंसावतारस्यापि ग्रहणम् ॥

**विचित्रगुणचित्रितां विविधदोषवैदेशिकीम्** । यथा भगवानुभयलिङ्गस्तथा तद्यक्तिः । अवतारव्यक्तिष्वप्युभयलिङ्गत्वम् । स्वं स्वभावमजहत्येवावतरति तनुः ॥

**वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम्** । मत्स्यावतारे दया नेत्रमाविष्टा । कूर्मावतारे मनो वा निश्वासं वा प्रविष्टा ॥ ८२ ॥

**युगान्तसमयोचितं भजति योगनिद्रारसं**
**वृषक्षितिभृदीश्वरे विहरणक्रमाज्ञाप्रति ।**
**उदीर्णचतुर्णवीकदनवेदिनीं मेदिनीं**
**समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया ॥ ८३ ॥**

पृथिवी मग्नार्णवे । तां समुद्धरति वराहमूर्तेर्दंष्ट्रा । अत्र दया दंष्ट्रां प्रविष्टा । दयाभिजुष्टया दंष्ट्रयोद्धधार भगवान्धरणीम् । 'निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः' इति रघुवंशे ॥

**युगान्तसमयोचितं भजति योगनिद्रारसम्** । योगनिद्रा रक्ष्यमाणक्षेमविषयनिबिडचिन्तनम् । योगोऽलब्धलाभः । प्राणिनां योगार्थं निद्रा ॥

**वृषक्षितिभृदीश्वरे** । क्षितिर्भरणीया क्षितिभृता गिरिणा । तदीश्वरेणापि क्षितिर्भरणीया । तस्या आपदो मोक्षणं कर्तव्यं तेन ॥

**विहरणक्रमाज्ञाप्रति** । यद्यपि निद्रातीव भगवांस्तथाप्याश्रितापद्विषये जागरूक एव ॥

**उदीर्णचतुर्णवीकदनवेदिनीं मेदिनीम्** । आपद्वेदनक्षण एव दयया सोद्वेगे । नाक्रन्दनाद्यपेक्षा रक्षणे । कदनवेदिनीं समुद्धृतवतो । वेदनक्षणे समुद्धारः ॥

**समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया** । दंष्ट्रेदं शक्षतखण्डनादिकरी स्यात् । साप्युद्धारक्रियायां विनियोज्य दयोपकरणीक्रियत इति दयाप्रभावो द्योत्यते ॥ ८३ ॥

**सटापटलभीषणे सरभसाट्टहासोद्भटे**
**स्फुरत्क्रुधि परिस्फुटद्भ्रुकुटिकेऽपि वक्त्रे कृते ।**

**दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना**
**सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे ॥ ८४ ॥**

दयाप्रभावेनात्युग्रसिंहवक्त्रमपि पुण्डरीकाक्षं सौम्यं वत्सलं भवति। उग्रस्यैव नृसिंहस्य भद्रत्वं प्रसिद्धम्। तन्मन्त्रोऽपि भद्रघटितः। 'भद्रां नृसिंहकुहनाम् —' इत्युक्तं वरदराजस्तवे। 'नारसिंहवपुः श्रीमान् —' इति सहपाठः सहस्रनामसु। 'प्रह्लादार्थे नृसिंहम् —' इति तात्पर्यरत्नावल्याम्। शिशुः प्रह्लादः। यद्यपि शत्रुभीषणार्थं भयङ्करं भवति वक्त्रम्, अत्र प्रधानभूतया दृशाऽतीव सौम्यता प्रदर्श्यते। न शिशुं प्रह्लादं भीषयेत्तदर्थमेवावतरन्प्रभुः। सिंहवक्त्रेऽपि, प्रबलशत्रुयोधनावसरेऽपि दयाविष्टत्वं नेत्रयोरिति दयाप्रभावः। नामुख्यभूतदुष्कृद्विनाशानुरोधेन मुख्यभूतसाधुपरित्राणत्यागो न्याय्यः। सिंहक्ष्माभृतः सिंहस्यावतरणमुचितम् ॥

**सटापटलभीषणे**। 'सटाच्छटाभिन्नघटा' इति माघे सिंहसटा भीषिका ॥

**सरभसाट्टहासोज्झटे**। दंष्ट्रायाः करालतरत्वमट्टहासेन। दयाविष्टवराहदंष्ट्राया वैलक्षण्यं नृसिंहदंष्ट्रायाः ॥

**स्फुरत्क्रुधि परिस्फुटद्भ्रुकुटिकेऽपि वक्त्रे कृते**। क्रोधः स्फुरति मुखे। भ्रुवौ विभज्येते। एवं वक्त्रं क्रुद्धम्। कृत इति इदं क्रुद्धत्वं कृत्रिमम्; न स्वाभाविकमिति व्यज्यते। 'क्रोधमाहारयत् तीव्रम्' इति ऋषिः खरायोधने। आहार्यः क्रोधः ॥

**दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना**। दया प्रस्तुतस्तनी शिशवे स्तन्यं ददातीत्युल्लेखः। 'स्ववात्सल्यक्रोडीकृतभरतशावेव भवती निराबाधां पादावनि न विजहौ कोसलगुहाम्' इति रघुसिंहे दशग्रीवस्तम्बेरमदलनाय वनं विशति पादुकया भरतस्य शावक्रोडीकरणमुक्तम्। अयं प्रह्लादो वास्तवडिम्भः ॥

**सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे** । वक्त्रे भीषणे कृते ऽपि तत्रैव दृशि प्रकाशते दया । क्रुद्धस्य दृक्प्रथमं विक्रियेत । दयैव दृक्त्वेनाविर्भूता । यथा प्रचण्डसर्वलोकतापकौष्ण्यैकान्तादित्यमण्डलान्तर्वर्तिनो भगवतः ........पुण्डरीकसदृशाक्षिमत्त्वम् ; तथा क्रोधैकान्तसर्वजगत्तापकोग्रवक्त्रस्थदृशोः सरोजसदृशत्वम् । अघटितविरुद्धघटनापटीयसि नृसिंहे एकस्मिन् वक्त्रे क्रोधवात्सल्यकाष्ठयोः प्रदर्शनमद्भुतमिति द्योत्यते 'समुदिताकृतिः' इति ॥ ८४ ॥

**प्रसक्तमधुना विधिप्रणिहितैः सपर्योदकैः**
**समस्तदुरितच्छिदा निगमगन्धिना त्वं दये।**
**अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितु-**
**श्चराचरमचीकरश्चरणपङ्कजनाङ्कितम् ॥ ८५ ॥**

मधुस्यन्दिपादाम्बुजेनोच्चनोचस्य त्रिजगतो निर्विशेषमङ्कनं कार्यते दयया । अत्र वृषाचलपतेः पादं प्रविष्टा दया । पादे रूढा दया । अञ्जनेनाङ्कन सुलभम् । अञ्जनाद्रीशितुः प्रभूताञ्जनवत्त्वात्त्रिजगतोऽप्यङ्कनं सुकरम् ॥

**प्रसक्तमधुना** । मधु स्यन्दते दयया । प्रस्नुतस्तनत्वमिव ॥

**विधिप्रणिहितैः सपर्योदकैः** । अयमपरो डिम्भः प्रह्लादवत् । विधिना विधिना पूजा विधीयते पाद्यसमर्पणेन ॥

**समस्तदुरितच्छिदा निगमगन्धिना** । पादपङ्कजमात्रेण सर्वाघापनयनम् । वेलातीतश्रुतिपरिमलमिदं दयाप्रचुरं पदपङ्कजम् ॥

**अञ्जनाद्रीशितुश्चरणपङ्कजेन** । गिरिप्रमाणमञ्जनमस्त्यत्र त्रिजगदङ्कनाय । अञ्जनाद्रीशितुः सर्वोत्तुङ्गस्य त्रिविक्रमभूमिकापरिग्रहवर्णनमुचितम् ॥

**अशेषमविशेषतश्चराचरं त्रिजगत्** । दयास्वभावो निर्विशेषत्वम् ॥

**दये त्वमङ्कितमचीकरः** । दयाकारितत्वमङ्कनस्य । पादमायाता दया । इदं विचित्रं वैष्णवं विष्णुपदमुद्राङ्कनं ; दयया चरणपङ्कजमुद्रा ॥ ८५ ॥

परश्वथतपोधनप्रथनसत्क्रतूपाकृत-
क्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः ।
वृषाचलदयालुना ननु विहर्तुमालिप्यथा
निधाय हृदये दये निहतरक्षितानां हितम् ॥ ८६ ॥

दयाप्रयुक्तत्वं सर्वेषामवताराणामित्युक्तम् । का वा दया जामदग्न्यस्य त्रिःसप्तकृत्वः परशुना क्षत्रियाणां छेत्तुश्छिन्नतत्तनुगलद्रुधिरपूरितसरोभिः पितरं सन्तर्पयितुः । जुगुप्सितघोरहननसततव्यापृतस्य तस्यापि दयाभरितत्वानिरूपणे दयाराज्यं न सिद्ध्येत् । तस्यापि हितत्वेन दयामूलत्वमुपपाद्यते । प्रलयस्य दयाकेलित्वं निरूपितम् । क्षत्रप्रलयस्य दयामूलत्वं प्रसाध्यते । यज्ञे वधोऽवध इति श्रूयते । यज्ञे संज्ञपिताः पशवः 'पथिभिः सुगेभिः' स्वर्गं गच्छन्तीति श्रूयते । न हननमात्रमहितत्वव्याप्तम् । अप्रतिसमाधेयव्याधिपीडितानामात्मवधो न दोषाय ।

"राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः ।
विमलाः स्वर्गमायान्ति नराः सुकृतिनो यथा ॥'

इति लौकिकराजदण्डोऽपि शुद्धिहेतुर्भवति । 'हतो वा प्राप्स्यसे स्वर्गम्' इति गीयते । परशुरामकृतक्षत्रहननस्य हितत्वरूपणे घोरवदवभासमानस्य सर्वस्य हितत्वं प्रसाध्यते ।

'चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥'

इति वेणीसंहारे । संग्रामयज्ञे हनिष्यमाणानां कौरव्याणां पशुत्वं वर्ण्यते तत्र भीमेन । अत्रापि प्रथनस्य सत्क्रतुत्वं, तत्र निहतानां क्षितीश्वराणामुपाकृतपशुत्वं चोच्यते । यज्ञोपाकृतपशूनां निहतत्वेपि यथा रक्षितत्वं तथात्रापि निहतरक्षिता एव । हननमपि तद्धितमेव ॥

परश्वथतपोधनप्रथनसत्कृतपाकृतक्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः । 'रामप्रव्राजनं ह्येतच्छुभोदर्कं भविष्यति' इति कैकेयी-दूषकं भरतं प्रति भरद्वाजः । क्रूरत्वमतस्यापि कर्मणो हितत्वं सम्भवेद्वस्तुतः ; यथा शस्त्रवैद्यस्य क्रूरच्छेदनादिचिकित्सायाः । यो दशमुखं रावणं जिगाय, तं सहस्रभुजमर्जुनं परशुना शाखिवदाच्छिनत् । परशुना शाखा च्छिद्यते यज्ञार्थम् । तत्साधनेन परशुना शत्रुहननम् । संपूर्णं यज्ञतौल्यं निरूप्यते ॥

वृषाचलदयालुना । गिरिवासिनः परशुना छेदने दक्षाः । परशुधरास्ते । गिरिराजस्य परश्वधत्वेनावतीर्णत्वं युक्तम् ॥

विहर्तुमालिप्यथा ननु । कुंकुमस्थासकानुलेपनमिव । पर्यवसानतो हितत्वम् । पूर्वं दयया भगवच्चरणपङ्कजेन त्रिजगदङ्कनमुक्तम् । अत्र पत्या दयाया देव्याः कुंकुमाङ्कनमुच्यते ॥

दये निहतरक्षितानां हितं हृदये निधाय । 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इत्यवतारनिमित्तं वर्ण्यते । अस्मिन्नवतारे दुष्कृतामपि परित्राणाय भवति तद्विनाश इति व्यज्यते निहतरक्षितानामिति । निहननेनैव रक्षिताः । हननस्यैव रक्षणरूपत्वमुपपाद्यते हितं हृदि निधायेति । अन्ततो हितत्वाद्रक्षण एव पर्यवस्यति । निधायेति हिताभिप्रायस्य निगूढत्वं व्यज्यत इव । हितत्वस्यात्यन्तनिगूढत्वाज्जनाः 'निर्दयः' इति भगवन्तं गर्हन्ते ॥ ८६ ॥

**कृपे कृतजगद्धिते कृपणजन्तुचिन्तामणे**
**रमासहचरं तदा रघुधुरीणयन्त्या त्वया ।**
**व्यभज्यत सरित्पतिः सकृदवेक्षणात्तत्क्षणा-**
**त्प्रकृष्टबहुपातकप्रशमहेतुना सेतुना ॥ ८७ ॥**

सीतारामावतारणात्किमधिकं हितं क्रियेत जगतः ? 'जगति हितं न नस्त्वयि भरन्यसनादधिकम्' इति यतिपतियामुनप्रभृतिप्रथितशरणागतिसमय-

स्य किं मूलम् ? सीतारामचरितं रामायणम् । रामस्य शरणागतगोष्ठी लघुतरा कृता मैथिल्या । अतस्तस्याः प्राधान्यं व्यङ्क्तुं रमासहचरत्वेनात्र रघुधुरीणस्य वर्णनम् । यद्यपि रघुधुरीणः सः, रमापेक्षया स तत्सहचर एव भवति । सीताप्रदर्शितमार्गानुसारी रामः । अग्रतो गच्छति सीता । जगद्धितं शरणागतिधर्मप्रकाशनम् । सेतुदर्शनसेतुस्नानपूर्वकं क्रियेत शरणागतिः प्रायेण । शरणागत्यनुष्ठानोपयोगितया सकृदीक्षणमात्रेण प्रकृष्टब्रह्महत्यादिमहापातकानिवर्तकः सेतुः कारितः सकृत्कटाक्षमात्रेण दयया । 'तं वीक्ष्य सेतुमधुनापि करीश नूनं सर्वे षडूर्मिबहुलं जलधिं तरन्ति'॥

कृपे कृतजगद्धिते । चक्रवर्तितनूजस्यावतारणं निरतिशयं हितं जगतः । 'राममूतं जगत्सर्वम्—' इति राममयत्वमाप्यते जगता । यावत् स्थास्यन्ति गिरयस्तावद्रामायणकथा लोकेषु प्रचरिष्यति । रामो रामो राम इति जनानां कथा भवन्ति । रामभूतं भविष्यति जगत् । रामभूतत्वं ब्रह्मभूतत्वम् । ततः किं हिततरम् ॥

कृपणजन्तुचिन्तामणे । शरणागतिप्रकाशनेन न्यस्यमानभरस्वीकरणेन चाकिञ्चनजनचिन्तामणिर्दया ॥

रमासहचरम् । भगवतोऽपि सीतायाः करुणाधिका ॥

तदा । त्रेतायुगप्रवर्तितकार्तयुगवृत्तान्ते श्रीराघवे विष्णौ मानुषरूपेण चरति ॥

रघुधुरीणधन्या त्वया । शरणागतिश्लोके राघवायेत्युक्तं विभीषणेन । स्वप्राणैरपि प्रपन्नरक्षणेच्छां प्रकटीचक्रे प्रभुः कपोतदृष्टान्तोपन्यासेन शिबिचक्रवर्तिकथोपन्यासेन चेत्युक्तं द्राविडकविसार्वभौमप्रणीतरामायणे । उक्तं च कुटिलमतिनापि कौटिल्येन राक्षसमुद्दिश्य 'दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता नीतं येन यशस्विनातिलघुतामौशीनरीयं यशः' इति ॥

सकृदवेक्षणात्तत्क्षणात् । सकृदीक्षणेन सागरविभागः सेतुना ।

यथा सकृदनुष्ठितादुपायात्तत्क्षण एव फललाभः ; तथा तत्क्षण एव सेतुसिद्धिः । शरणागतिकथाप्रस्तावे सर्वं क्षणमात्रनिर्वर्त्यम् ॥

**प्रकृष्टबहुपातकप्रशमहेतुना सेतुना** । सकृत्कृतः शास्त्रार्थः । 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति' । अत्र दर्शनस्यादृष्टार्थत्वं सर्वाभ्युपगतम् । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यमृतसेतुविषयोक्तमस्मिन् सेतावपि समानमिव ॥ ८७ ॥

**कृपे परवतस्त्वया वृषगिरीशितुः क्रीडितं**
**जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।**
**मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितै-**
**र्हतप्रबलदानवैर्हलधरस्य हेलाशतैः ॥ ८८ ॥**

यत्र दयाया अत्यन्तमनाविष्कार इति लोको मन्येत , तत्रापि दयामयत्वप्रदर्शने कैमुत्येनेतरावताराणां दयाघनत्वं प्रतिपाद्येत । जामदग्न्यावतारस्य दयाप्रचुरत्वं वर्णितम् । संप्रति बलभद्रावतार दयांशाः प्रकाश्यन्ते । मदपरवशो लाङ्गलीति प्रसिद्धम् । मदच्छलेन विस्मरति हल्याश्रितदोषानिति मदशेषस्यापि दयोपकारकत्वम् । हलधरः स्याद्रिवासी । गिरीशितुर्हलधरत्वेनावतरणमुचितम् । क्षेमकृषीवलोऽयं हलधरः ॥

**कृपे त्वया परवतो वृषगिरीशितुः क्रीडितम्** । दयापरवत एव क्रीडा । हलप्रस्तावे वृषशब्दः स्वरसः । वृषा हलैः कर्षणे उपयुज्येरन् ।

**अशेषतो जगद्धितम्** । कार्त्स्न्येन दयामयी लीला । लीलाव्यापारस्य कृत्स्नस्य हितत्वम् ; अतो दयामूलत्वम् । एवं च दयालीलैव लीलेति गम्यते ॥

**मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितैः** । सर्वथा दोषादर्शनं प्रसाध्यम् । नीलया देव्या श्रीनिवासस्य दोषादर्शनं कार्यत इत्युक्तम् । दुर्योधनः प्रबलदुष्कृत् हलधरशिष्यः । तस्य दोषास्तिरोधीयन्ते ॥ ८८ ॥

**प्रभूतविबुधद्विषद्भरणखिन्नविश्वंभरा-**
**भरापनयनच्छलात्त्वमवताय लक्ष्मीधरम् ।**

**निराकृतवती दये निगमसौधदीपश्रिया**
**विपश्चिदविगीतया जगति गीतयान्धं तमः ॥ ८९ ॥**

'अनन्तदयांबुधेस्त्रुटितजनताशोकः श्लोकः स्वयं समजायत' इत्युक्त-रीत्या दयानन्त्यप्रयुक्तं चरमश्लोकरहस्यप्रकाशनम् । दयाकाष्ठा तच्छ्लोका-वतारणमवतीर्णेन भगवता । गीतारूपप्रदीपदानं करुणाकाष्ठा । 'गौ-र्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः' इति विश्वंभरादेवीकरुणाक्रन्दनं व्याजमात्रमवतारे । छलमेव तत् । तत्त्वतस्तु गीतारूपोत्तमोपब्रह्मणगा-नमेवावतारे निमित्तम् ॥

**प्रभूतविबुधद्विषद्भरणाखिन्नविश्वंभराभरापनयनच्छलात्** । यद्यपि विश्वंभरा सर्वंसहाऽनायासेन विश्वभारभरणशक्ता ; तथाऽपि प्रभूतपा-पभारभरितपापिष्ठासुरभारं वोढुं न प्रभवति । विबुधा देवाः स्वयंप्रभात-वेदा जगद्रक्षणाधिकारे प्रजापतिना नियुक्ताः । तान्प्रभूतं द्विषन्त्यसुराः । ते पापिष्ठाः । गुरुतमान्पर्वतादीन्सोढुं क्षमा क्षमा तत्पापभारं साधुविषय-तद्द्वेषभारमसहमाना करुणं क्रन्दति तद्भरापनयनाय । प्रभूतविबुधद्वेष-स्यासहनीयभारत्वं व्यज्यते प्रभूतविबुधद्विषदित्यसुरनिर्देशेन । एतद्भरेण विश्वम्भराया अपि खेदजनिः । सर्वंसहाया अप्यसहनोत्पादः । विश्वासादपि गुरुतरभारत्वं प्रभूतसुरद्वेषस्य । खिन्नेति 'अश्रुमुखी खिन्ना' इति शुकश्लोकस्य प्रत्यभिज्ञापनम् । छलादिति तद्व्याजेन । 'छन्नेनाथ छलेन वा' इति विद्याग्रहीतुर्निषेधः । करुणामयस्य गुरोरुपदेशोद्देशेन छलेनान्ते-वास्यभिगमनं न दोषाय । काष्ठागतं वेलातीतं कारुण्यं गुणायैव भवेत् ।

**त्वं लक्ष्मीधरमवतार्य** । दययावतार्यते भगवाल्लँक्ष्म्या सहैव । त-द्विशिष्टस्यैव दयाघनत्वम् ॥

**लक्ष्मीधरम्** । तां वहन्भूभारमवतारयति । भूदेवीभारमवतारयितुं लक्ष्मीरूपभरं वहन्नवतरति ॥

**निगमसौधदीपश्रिया** । 'बिभेत्यल्पश्रुताद्वेदः' 'गहने हीयं विद्या

संप्रतिष्ठिता' इति श्रुतिमौळीनां तात्पर्यं दुरारोहम् । सौधवन्निगमोऽनेकभूमिकोऽत्युन्नतः । दीपं विना कथं तत्र निरपायं सोपानारोहः संभवेत् ? गीता च तदारोहसहकर्ता दीपो भवति । गीतादत्तालोकेन सुलभं निरपायमस्खलितमारुह्यते निगमप्रासादः । 'तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥' इति वर्णितो ज्ञानदीपो गीतैव । निगूढा गहनाः श्रुत्यभिप्रायाः प्रकाश्यन्ते गीतादीपेन । 'सौधदीपश्रिया गीतया' इति ; प्रासादे दीपनिवेशनकाले मङ्गळगीतानि मधुरं गीयेरन् । गीतादीपनिवेशनं गायतैव कृतमिति व्यज्यते । प्रासादगिर्यादिकं निश्यारोहन्तो दीपहस्ता गायन्त आरोहेयुः । अत्र गीतमेव दीपो भवति । शब्दमयत्वाज्ज्ञानमयत्वाच्च दीपस्य ॥

**जगति विपश्चिदविगीतया गीतया** । जगतीत्युपलक्षणं कालस्यापि । यद्यपि कालो निरवधिः, पृथिवी च विपुला । न कुत्रापि देशे कस्मिन्नपि काले गीताप्रतिपादितार्थेषु विपश्चितो विद्वांसो विप्रतिपद्यन्ते । सर्वेषु देशेषु, सर्वेषु कालेषु सर्वेऽपि विपश्चितो मतान्तरस्था अपि गीता सुगीतेत्येव वदन्ति । न तत्र केषामपि वैमत्यम् । गीता सुगीतेत्यत्र विपश्चिल्लोके कुत्रापि कदाऽपि न विगानं दृश्यते । केनापि विपश्चिता विगीता चेद्गीता, कथं गीता गीता भवेत् ? अविगीतैव गीता स्यात् । विगीता न गीताव्यपदेशनार्हा । गीतया ध्रुवमविगीतया भाव्यम् । विगानं नाम विप्रतिपत्तिः । विगीतमिति विप्रतिपत्तिविषयत्वमुच्यते । सर्वासु भाषासु सर्वेषु देशेषु गीतार्थाः प्रकाश्यन्तेऽस्मत्प्रयत्नं विनैव । ईदृशः सर्वदेशसर्वकालाव्याहतप्रचारो गीताया भावीति सर्वज्ञैराचार्यैः पूर्वमेव ज्ञातमिति महान्हर्षोऽस्माकम् । स्वीडन्प्रभृतिदेशेषु सप्त सहस्राणि, तदधिका वा जना एकस्मिन् काले गीतां पठ्यमानां सादरं शृण्वन्तीति प्रसिद्धम् । 'जगति गीतया' इति समभिव्याहारेण नेदं कुरुक्षेत्रे रथोपस्थे कस्मिंश्चित् काले गीतम् । कृत्स्ने जगति सर्वदेयं गीयत इति व्यज्यते ॥

**अन्धं तमो निराकृतवती** । '....अहमज्ञानजं तमः । नाशया-म्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥' इत्युक्तं भगवता । तद्गीतगीताविषये तत्सत्यम् । अज्ञानजं तमोऽन्धं तमः । अन्धत्वं द्रष्टृत्वमाक्षिपति । दर्शनयोग्यताप्रसङ्गवत्त्वे सति दर्शनासमर्थतान्धत्वम् । आन्तरमिदं तमः । गीतारूपशब्ददीपं विना नान्यस्य दीपस्य हृदयगुहान्तः प्रविश्य तत्रत्यनिबिडसन्तमसनिरासकत्वसम्भवः ॥ ८९ ॥

**वृषाद्रिहयसादिनः प्रबलदोर्मरुत्प्रेङ्खित-**
**स्त्विषा स्फुटतटिद्गुणस्त्वदवसेकसंस्कारवान् ।**
**करिष्यति दये कलिप्रबलधर्मनिर्मूलनः**
**पुनः कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥ ९० ॥**

कल्क्यवतारो भावी । कलियुगान्तेऽवतरिष्यति कल्की भगवान् । अयं वेङ्कटनायकोऽपि 'कलौ वेङ्कटनायकः' इति कलिकालुष्यनिवृत्त्यर्थमवतीर्णः । उभयोः प्रत्यासत्त्याधिक्यम् । श्वेताश्ववाहनः कल्की । अद्रिवासिनः प्रायेण हयसादिनः स्युः । वृषाद्रेर्हयसादिनोऽश्वारोहस्य कल्किनोऽवतार उचितः । अत्रावतरिष्यतः कल्किनः कृपाणो धाराधरत्वेन रूप्यते । दशावतारस्तोत्रेऽपि 'निस्त्रिंशधाराधरः' इति रूपणं कृतम् । कृपाणोऽपि कृपां वर्षति दयाकृपायास्तस्याः प्रभावेण । कलियुगस्य कृतयुगत्वेन परिवर्तनं कार्यते कृपाणधाराधरेण ॥

**वृषाद्रिहयसादिनः** । वृषाद्रौ स्थितस्याश्वारोहस्य ॥

**प्रबलदोर्मरुत्प्रेङ्खितः** । भुजमरुच्चालितः ॥

**त्विषा स्फुटतटिद्गुणः** । स्फुरत्कान्तयस्तटित इव भवन्ति । कान्तय एव विद्युतः ॥

**त्वदवसेकसंस्कारवान्** । तप्तमायसकृपाणादिकं जलावसेकेन संस्क्रियेत । अत्र दयाम्भोवसेकैः संस्क्रियते । मेघो जलपानेन पूर्येत ॥

**कृपाणधाराधरः** । उद्यतोऽपि कृपाणो दयाप्रभावेण वर्षुकव-

लाहकवद्दयार्द्रो भवति । धाराधरवत् कृपां वर्षति । साम्प्रतमयं कृपाणः कृपां वर्षतीति । कृपाणधारा धाराधरवद्भासन्ते । धाराधरा एव भवन्ति दयाशक्त्या । 'उल्लासयकालकरवालमहाम्बुवाहम्' इति काव्यप्रकाशोदाहृतश्लोके खड्गस्याम्बुवाहत्वरूपणम् ॥

प्रबलधर्मनिर्मूलनः । ग्रीष्मतापोऽपनुद्यते । तापत्रयधर्मो निर्वाप्यते ॥

पुनः कृतयुगाङ्कुरं भुवि करिष्यति । कार्तयुगं धर्मं पुनः प्ररोहयति भुवि ॥ ९० ॥

विश्वोपकारमिति नाम सदा दुहाना-
मद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतेर्दये त्वं
न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥ ९१ ॥

अत्यन्तदृप्तोऽहं त्वामुपेक्षयावधीरयेयं च । 'रुषा निरस्तोऽपि शिशुः स्तनन्धयो न जातु मातुश्चरणौ जिहासति' इत्युक्तं भगवद्विषये । दयायास्तव न रोषसम्भवः ; दयात्वादेव । मदवधीरणमदुपेक्षानिमित्तत्वदुपेक्षायां प्रसक्तायां मदवधीरणादिकमविगणय्य त्वयाऽहं बध्वा निरोद्धव्य इति दयया बन्धनं प्रार्थ्यते सर्वबन्धविमुक्तये । हर्षगानं क्रियतेऽन्तिमदशके उद्धर्षिणीवृत्तेन । सिंहोन्नतेत्यपि वृत्तनाम । सिंहाचलशिखरे सिंहोन्नतावृत्तेन दशमदशकं गीयते सहर्षम् ॥

सदा विश्वोपकारमिति नाम दुहानाम् । सर्वोपकाराः कामधेन्वा दयया दुह्यन्त इति सविस्तरं निरूपितमेतावता प्रबन्धेन । एवं सर्वोपकारदोग्ध्रीमपि दयां त्वाम् ॥

अद्यापि । प्रपत्त्यनन्तरमपि । नवतिश्लोकैस्त्वत्प्रभावगानानन्तरमपि ॥

त्वामवधीरयन्तम् । त्वत्तिरस्कारकम् ॥

त्वयैव त्वयि न्यस्तस्वरक्षणभरं माम् । कथं प्रपन्नस्य त्वत्प्रप-

त्यनन्तरं प्रपत्त्याववीरणसम्भव इत्याशङ्कायामुच्यते—'स्वदत्तस्वधिया स्वार्थं स्वस्मिन् न्यस्यसि मां स्वयम्' इत्युक्तरीत्या त्वमेव मद्रक्षणभरं त्वयि न्यस्तवती । न मम तत्कर्तृता । तत्रापि त्वमेव निदानम् । अत आक्षेपस्यानवकाशः ॥

दये त्वं वृषाद्रिपतेर्नाथे निवेशय । नाथपादसात्कुर्याः । निवेशय विवाहयेत्यप्यर्थो ध्वन्यतेति रसिकैर्भाव्यम् । नाथे निवेशयेति नाथशब्दसमभिव्याहारोऽपि तत्र तात्पर्यं व्यञ्जयति ॥ ९१ ॥

**नैसर्गिकेण तरसा करुणे नियुक्ता**
**निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।**
**विस्मापयेत् वृषगिरीश्वरमप्यवार्या**
**वेलातिलंघनदशेव महाम्बुराशेः ॥ ९२ ॥**

निम्नगा आपः । यद्यप्यहमत्यन्तनीचो निम्न एव । निरतिशयया दृप्तयाऽहमत्युन्नतमात्मानं मन्ये । उन्नतमानिनि मय्यपि वितन्यन्ते दयावितत्यः । वृषगिरीश्वरादप्युन्नततरत्वमहमभिमन्ये । अत्युन्नतमानिनो ममापि त्वल्लहरीमज्जनं वीक्ष्य विस्मयते वृषगिरीश्वरः ॥

**करुणे नैसर्गिकेण तरसा नियुक्ता** । स्वाभाविकेन तव रक्षणसंभ्रमवेगेन प्रेरिता ॥

**ते विततिर्निम्नेतरेऽपि मयि यदि स्यात्** । अनित्ये उच्चेऽपि मयि यदि विततिर्निष्पतेत्सा विततिः ॥

**महाम्बुराशेरवार्या वेलातिलंघनदशेव** । महतः समुद्रस्योद्वेलविजृम्भणसमय इव ॥

**वृषगिरीश्वरं विस्मापयेत** । अत्युन्नतगिरिशिखरस्थमद्भुतरसेन पूरयेत् ॥ ९२ ॥

**विज्ञातशासनगतिर्विपरीतवृत्त्या**
**वृत्रादिभिः परिचितां पदवीं भजामि ।**

**एवंविधे वृषगिरीशदये मयि त्वं**
**दीने विभोः शमय दण्डधरत्वलीलाम् ॥ ९३ ॥**

प्रपन्नेनापि मया पुनः पुनरपराधाः क्रियेरन् । तत्प्रयुक्तदण्डधारणं केवलं कृपया शमय ॥

**विज्ञातशासनगतिः** । जानामि शास्त्रविहितं पन्थानम् । शास्त्रबोधितप्रत्यवायं चापथप्रवृत्तौ । शासनमिति शास्त्रं दण्डनमित्युभयग्रहणम् ॥

**विपरीतवृत्त्या वृत्रादिभिः परिचितां पदवीं भजामि** । विरुद्धमेवाचरामि; प्रतिकूलवृत्रादिवत् । विरुद्धपदवीभजनं मम भजनमार्ग इति व्यज्यत इव भजनशब्देन । वृत्रादयो वृत्रहिरण्यरावणादयः ॥

**एवंविधे मयि दीने विभोर्दण्डधरत्वलीलां शमय** । निगदव्याख्यातमिदम् ॥ ९३ ॥

**मासाहसोक्तिघनकञ्चुकवञ्चितान्यः**
**पश्यत्सु तेषु विदधाम्यतिसाहसानि ।**
**पद्मासहायकरुणे निरुणत्सि किं त्वं**
**घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ ९४ ॥**

साहसैकरुचिरहम् । साहसं मा कुर्वीति कुलिङ्गशकुनिवत्परान्वच्मि । स्वयं यथा कुलिङ्गशकुनिः सिंहमुखे प्रविशति, तथा सिंहक्ष्माभृत्क्रोधमुखे प्रवेक्ष्यामि । चातकवद्वर्तितव्यं प्रपन्नेन । अहं तद्विहाय पक्ष्यन्तरस्य वृत्तमाचरामि ॥

**मासाहसोक्तिघनकञ्चुकवञ्चितान्यः** । साहसं मा कुर्वीति सततं वदंस्तद्वेषेणेतरान्वञ्चयामि ॥

**पश्यत्सु तेष्वतिसाहसानि विदधामि** । उपदिश्यमानजनसाक्षिकं साहसकाष्ठाभूतकर्माणि करोमि । विदधामीति परानुद्दिश्य विधानमेकं स्वयं विधानं त्वन्यथेति बोध्यते ॥

**पद्मासहायकरुणे** । श्रीनिवासकरुणे । नासहाया त्वम् । अस्ति पद्मा तव सहाया ॥

**कुलिङ्गशकुनेरिव मे घोरं चेष्टितं किं न रुणत्सि** । करुणा-त्पूर्वमेव किमिति त्वं न वारयसि । साहसाद्वारणं कार्यं त्वयैव माता 'न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनि-र्यथा ॥' इति भारतश्लोकः स्मर्तव्यः । 'कुलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे । भीष्म तस्य सदा वाचः श्रूयन्तेऽर्थविगर्हिताः । मासाहसमितीदं स सततं वाशते किल ॥' इत्युक्तं शिशुपालेन राजसूये । अहं वेङ्कटगिरौ 'वाशमानः' कुलिङ्गः । सिंहमुखप्रवेशस्तत्साहसम् । स्तवेन सिंहाचलपद्धतिप्र-विविक्षा मत्साहसम् ॥ ९४ ॥

**विक्षेपमर्हसि दये विपलायितेऽपि**
**व्याजं विभाव्य वृषशैलपतेर्विहारम् ।**
**स्वाधीनसत्त्वसरणिः स्वयमत्र जन्तौ**
**द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥ ९५ ॥**

'लोकवत्तु लीलाकैवल्यम्' इति सूत्रे दयाविष्टभगवत्क्रीडापरमि-त्युक्तम् । तद्विचित्रमुपपाद्यतेऽत्र । मृगयाविहारव्याजः कल्प्यते भगवतो दया-देव्या । श्रेष्ठतमो विनोदो मृगयेति कविसार्वभौमः 'मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः' इति । जिघृक्षितानि सत्त्वानि वयम् । नास्यां दयाप्रवर्तितमृगयायां सत्त्वहिंसनप्रसङ्गः । तेषामादित्सयैव मृगया प्रवर्त्यते । सुदूरं पलायन्ते प्राणिनः । द्राघीयसा दयाजालेनासाद्यन्ते आवर्ज्यन्ते दम्य-न्ते च क्रमेण । महिष्याः सार्वभौम्या भर्त्रा सह मृगया क्रीडा ॥

**विपलायितेऽपि** । सुदूरं धावत्यपि ॥

**मयि** । सत्त्वमिति मम नाम; प्राणित्वात् । सत्त्वलेशरहितसत्त्व-महम् । सत्त्वनामतस्तत्र मृगयाविहारे त्वद्वागुराविषयो भवामि ॥

**वृषशैलपतेर्मृगयाविहारं व्याजं विभाव्य** । मदासादनार्थं क्री-डा कल्प्यते । परार्थैवेयं लीला । सत्त्वाहितैकप्रयोजना परार्थैकघटिका मृग-या लीला । सत्त्वानां स्ववशीकरणाय भगवल्लीला दयाकारिता । क्रीडेति

व्याजमात्रम् । शैलनिवासिनः प्रायेण मृगयारसिका भवेयुः । तत्रापि शैलाधिपते राज्ञस्तत्र भूयसी रुचिः स्यात् ॥

**विक्षेपमर्हसि** । नास्यां मृगयायां शरविक्षेपः; किं तु दयाविक्षेप एवेति व्यज्यते विक्षेपशब्देन । 'निसर्गसुहृदीश्वरो यदिह लक्ष्यमन्वीक्षते' इति सङ्कल्पसूर्योदये ॥

**सत्त्वसरणिः** । सत्त्वसञ्चरणमार्गः कार्त्स्न्येन दयाया विदितः ॥

**स्वयमत्र जन्तौ द्राघीयसी दृढतरा गुणवागुरा त्वम्** । 'तन्मामुदञ्चय तवोन्नतपादनिघ्नं देहल्यधीश गुणितेन दयागुणेन' इति देहलीशस्तुत्युक्तमत्र भाव्यम् । दीर्घदीर्घा वाञ्छामयी दया । यद्यपि दूरं पलायते जन्तुः ; दीर्घतरा दयावागुरा भवति तं ग्रहीतुम् । आसादितो दृढतरं बध्यते दयया । दृढं प्रयतते जन्तुर्दयाबन्धाद्गलितुम् । ततो दृढतरा भवति दया तं दृढं बन्धुम् ॥ ९५ ॥

**सन्तन्यमानमपराधगणं विचिन्त्य**
**त्रस्यामि हन्त भवतीं च विभावयामि ।**
**अह्नाय मे वृषगिरीशदये जहीमा-**
**माशीविषग्रहणकेलिनिभामवस्थाम् ॥ ९६ ॥**

साहसाद्वारय मां दये इति प्रार्थये । न साहसं स्वयं परित्यक्तुं शक्नोमि । मामासादयितुं दयावागुरायां विततायां सुदूरं धावामि । नाहं विरमामि पापकरणात् । अपराधान्गणशो विधातुं प्रारभे । तदनुसन्धाने त्रस्यामि । त्रासे समुत्पद्यमाने दयाप्रभावं विभावयामि । त्रासो हीयते । एवं त्रासाभयमध्ये वर्ते । अपराधरुचिरूपां बहुपायां मच्चेतोवृत्तिं झटिति शमय ॥

**सन्तन्यमानमपराधगणम्** । गणानां सन्तानाः ॥

**विचिन्त्य** । सम्यगालोच्य ॥

**त्रस्यामि** । भयग्रस्तो भवामि ॥

**हन्त भवतीं च विभावयामि ।** भयोत्पत्त्युत्तरक्षणे त्वत्स्मरणमात्रेण हर्षो जायते । त्रस्यामि हन्तेति त्रासक्षण एव भयनिवृत्तिरूपहर्षो द्योत्यते । हन्तेति पदमावर्त्य हन्त त्रस्यामि , हन्त भवतीं च विभावयामीत्युभयत्रान्वयो वा । पर्यायेण क्षणमात्रे खेदो हर्षश्च । स्वयं कृतस्त्रासः । दयाकृतो हर्षः ॥

**वृषगिरिशदये आशीविषग्रहणकेलिनिभामिमां मेऽवस्थाम् ।** आशीविषसर्पतुल्यत्वमपराधानाम् । दुरितस्य विषवन्मूर्छकत्वं पूर्वमेवोक्तम् 'दुरितमूर्छनाजुष्टम्' इति । सर्पैः क्रीडितुमिच्छाम्यहम् । विषसर्पग्रहणं मम क्रीडा । मत्क्रीडां त्वत्क्रीडा विरमयतु ॥

**जहि** । यथा सर्पो हन्यते , तथा तद्ग्रहणकेलिं जहि । 'जय जय जह्यजामि' तिवत् प्रकृतिहननप्रार्थना ॥ ९६ ॥

**औत्सुक्यपूर्वमुपहृत्य महापराधा-**
**न्मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।**
**आलिह्य तान्निरवशेषमलब्धतृप्ति-**
**स्ताम्यस्यहो वृषगिरीशधृता दये त्वम्** ॥ ९७ ॥

विश्वोपकारं दुहाना माता त्वम् । माता च गुरुजनः । सर्वात्मना गुरुस्त्वम् । गुरवस्त्वन्मूर्तयः । तुभ्यं गुरुदक्षिणा देया मया । भूयांसि मत्पापान्युपह्रियन्ते तुभ्यमित्युच्यते ॥

**मातः औत्सुक्यपूर्वम्** । श्रद्धापूर्वम् ॥

**महापराधानुपहृत्य** । आर्जितं सर्वं मात्रे उपह्रियते । 'यस्यैते तस्य तद्धनम् ।' महानैवेद्यमिदमिति व्यज्यते महच्छब्देन ॥

**प्रसादयितुम्** । प्रीणयितुम् ॥

**आलिह्य तान्** । निःशेषं वासनालेशं विनाऽऽलिह्य । लेहनेन निरवशेषापनयनम् ॥

**अलब्धतृप्तिः** । अनलंबुद्धिः ॥

**ताम्यस्यहो वृषगिरीशधृता दये** । क्षुभ्यसि । यदा क्षोभेन तदा त्वं ध्रियसे वृषगिरीशेन । धृतेति क्षोभे भर्त्रा धारणं व्यज्यते अधिकदानाद्भीतेन भर्त्रा ध्रियते ॥ ९७ ॥

**जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां**
**घर्मोपतप्त इव शीतलतामुदन्वान् ।**
**सा मामरुन्तुदभरन्यसनानुवृत्ति-**
**स्तद्वीक्षणैः स्पृश दये तव केलिपद्मैः ॥ ९८ ॥**

भगवद्वीक्षणैररविन्दानि सृज्यन्त इव । तानि तव लीलारविन्दानि । तैर्मां स्पृश मदपराधक्षान्तये ; भगवत्क्षोभशान्तये च ॥

**प्रतिघेऽपि** । कोपेऽपि । प्रतिघः कोपो विघ्नः । प्रभोः कोपः श्रेयसां विघ्नः ॥

**वृषाचलपतिस्त्वां न जह्यात्** । क्रुद्धोऽपि न त्वां हास्यति । त्वद्धानं न संभावनार्हम् ॥

**उदन्वान्** । वृषाचलपतेरुपमानमुदन्वान् ॥

**घर्मोपतप्तः शीतलतामिव** । घर्मतापेऽपि शैत्यरूपप्रकृतिं यथा न जहाति ॥

**सा** । तदविनाभूता तदविश्लिष्टा तत्स्वभावभूता ॥

**मामरुन्तुदभरन्यसनानुवृत्तिः** । पुनः प्रपदनरूपप्रायश्चित्तं त्वं न सोढुं पारयसि । सकृत्प्रपदनमेव त्वमधिकं मन्यसे । ऋणं प्रवृद्धमिव तत् । त्वद्धृदयान्नापसर्पत्यसत्सकृदाक्रन्दनमपि । पुनराक्रन्दनरूपपुनःप्रपदनं क्षते क्षारमिवासह्यं भवेत्तव ॥

**तद्वीक्षणैस्तव केलिपद्मैः** । भर्तृवीक्षणरूपत्वल्लीलारविन्दैः ॥

**मां स्पृश** । ॥ ९९ ॥

**दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं**
**स्नात्वापि धूलिरसिकं भजनेऽपि भीमम् ।**

**बध्वा गृहाण वृषशैलपतेर्दये मां**
**त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥ ९९ ॥**

अरुन्तुदभरन्यसनानुवृत्तिरित्युक्तम् । 'अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः' इति गजबन्धनं स्मृतिमायाति । गजस्य मम चास्ति भूयः साम्यम् । त्वद्वारणोऽहं त्वां निवारयामि, त्वामवधीरयामि । भवतीमवधीरयन्तमिति दशकोपक्रमोक्तमुपपाद्यतेऽत्राधोरणावधीरयितृगजदृष्टान्तेन । त्वद्वारणस्त्वद्गजोऽहम् । मां शृङ्खलाभिर्बधान ॥

**दृष्टेऽपि दुर्बलधियम्।** दृष्टमात्रे आधोरणे कदाचिद्भयमुत्पद्यते गजचेतसि । विषये दृष्टमात्रे तत्सङ्गरूपबुद्धिदौर्बल्यं भवति मम । शास्त्रदर्शने सत्यपि कृत्याकृत्यविषये दुर्बलधियमिति वा ॥

**दमनेऽपि दृप्तम्** । आधोरणेन दमनेऽपि कदा चिद्दृप्तो भवेद्गजः। दयया दमनेऽपि घोरपापसक्तो भूत्वा दयां भीषयामि ॥

**स्नात्वापि धूलिरसिकम्** । गजस्वभावोऽयं मत्स्वभावश्च । माधवदयामन्दाकिनीं विन्दन्नपि पङ्कैरेव निजतनुं कलङ्कयाम्यहम् ॥

**भजनेऽपि भीमम्** । विविधमुपचरणेऽपि कदा किं करिष्यतीति भयमुत्पादयति ; विश्वसनीयत्वाभावात् । 'गम्भीरवेदिनि गजे' इति माघे गजस्वभावो विचित्रं वर्णितः । आधोरणेन घासादिदानेन लालितो वनाय स्मरति, दृप्तश्च भवति। 'गजपुङ्गवस्तु धीरं विलोकयति चाटुशतैश्च भुंक्ते ।' विश्वोपकारेषु वत्सलतया त्वया दुह्यमानेष्वपि प्रतीपमेवाचर्यते मया ॥

**वृषशैलपतेर्दये मां त्वद्वारणम्** । त्वद्गजम् । त्वन्निवारकम् ।

**स्वयम्** । मत्प्रार्थनां विना । मद्वारणमविगणय्य ॥

**अनुग्रहशृङ्खलाभिर्बध्वा गृहाण** । भूयोभिर्दृढानुग्रहैर्मां बध्वा त्वद्वशीकुरु । अनुग्रह इति पश्चादागत्य ग्रहणं गजस्य । अनु पश्चात्। अविदिता त्वं ममोपकुर्याः । विदितं चेत्त्वदुपकरणं वारयेयम् । गजस्य पुरतो गत्वा शृङ्खलाभिस्तस्य बन्धनं न सुकरम् ॥ ९९ ॥

**नातः परं किमपि मे त्वयि नाथनीयं**
**मातर्दये मयि कुरुष्व तथा प्रसादम् ।**
**बद्धादरो वृषगिरिप्रणयी यथाऽसौ**
**मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ १०० ॥**

किं ते प्रियं करोमीति शतकसमाप्तिसमये पृच्छति स्तोतारं दया । विश्वोपकारा दुग्धाः । किमन्यत्प्रियं कुर्यामिति पृष्टे इहैव वृषाचलपतेः पादे मुक्तानुभूतिर्वाञ्छितेति विज्ञाप्यते । अमृत इह भवानि । हनूमन्तं यथा सीता व्यजिज्ञपत्तद्रीत्या तच्छब्दैः प्रार्थ्यते । 'तथा कुरु दयां मयि' इति तत्र । 'मयि कुरुष्व तथा प्रसादम्' इत्यत्र । एवं च सीतानुगमः; प्राचेतसानुगमश्च ॥

**मातर्दये** । शतकान्ते मातरिति सम्बोधनम् ॥

**नातः परं किमपि मे त्वयि नाथनीयम्** । एतस्मान्नान्यत्प्रार्थनीयमस्ति ॥

**मयि कुरुष्व** । आत्मनेपदेन मद्विषयत्वत्प्रसादफलं तवैवेति व्यज्यते ॥

**यथाऽसौ मुक्तानुभूतिमिह दास्यति** । त्वत्पतिर्मय्यादरं बध्नातु । त्वं तु मां बधान । बध्वा च मां गृहाणेति वैचित्र्यमभिप्रेयत इव बद्धादर इति । तेनादरे बद्धे मम बन्धविमोको भवेदिति विरोधरूपवैचित्र्यं च ॥

**मुकुन्दः** । मोक्षदाता । अद्य वा कालान्तरे वा मोक्षं दास्यत्येव ; मुकुन्दत्वात् । इहैवाद्यैव मुक्तानुभूतिः प्रार्थ्यते ॥ १०० ॥

**निःसीमवैभवजुषां मिषतां गुणानां**
**स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम् ।**
**तैरेव नूनमवशैरभिनन्दितं मे**
**सत्यापितं तव बलादकुतोभयत्वम् ॥ १०१ ॥**

दयास्तोत्रमिदं पठ्यमानं सर्वे गुणाः सावधानाः शृण्वन्ति ।महति

गुणसमाजे पठ्यत इदं स्तोत्रम् । आत्मेश्वरो वृषगिरीशः । पुंप्रधानेश्वरेश्वरी लक्ष्मीः । वृषगिरीशगुणेश्वरी दया । दयेतरेषां सर्वेषां गुणानां स्फारेक्षणैर्निर्निमेषं मिषतां तानविगणय्य मयेदं दयास्तोत्रमरच्यत । स्तोत्रं कृत्स्नं श्रुत्वाऽवशैरपि तैरभिनन्दितमिदम् । मुख्यगुणं त्वां विदित्वा न बिभेति कुतश्चनेत्यकुतोभयत्वं संपद्येत । न प्रबलेभ्यो गुणान्तरेभ्योऽपि भयं भवतीत्यकुतोभयत्वं सत्याप्यते ॥

**निःसीमवैभवजुषां मिषतां गुणानां स्तोतुर्दये ।** 'यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः' इत्येकैकस्य गुणस्य निरवधिवैभवमस्ति । सर्वे गुणाः परितः पश्यन्त आसते । अनादरे षष्ठी । 'स्वर्गे लोके मिषति' इति श्रीशुकश्लोके मिषतीति सप्तमीप्रयोगः ॥

**वृषगिरीशगुणेश्वरीं त्वाम् ।** गुणसार्वभौमीं त्वाम् ॥

**तैरेव नूनमवशैरभिनन्दितं मे ।** अनिच्छद्भिरपि तैरभिनन्द्येत तव स्तुतिः युज्यते युज्यत इति ॥

**तव बलान्मेऽकुतोभयत्वं सत्यापितम् ।** निर्भयत्वं लम्भितोऽस्मि बाधकगुणेभ्योऽपि । गरुडादप्यभयं दत्तं कालियस्य, सुपर्णस्त्वां नाद्यादिति ॥

**अद्यापि तद्वृषगिरीशदये भवत्या-**
**मारम्भमात्रमनिदंप्रथमस्तुतीनाम् ।**
**सन्दर्शितस्वपरनिर्वहणा सहेथा**
**मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ १०२ ॥**

निखिललोकसुचरितमुष्टिंधयस्य मम दुरितस्य मर्षणं तिष्ठतु । ततोऽप्यधिकं दुरितं सम्यक्सर्वगुणपरिच्छेदरूपस्तुतौ प्रवृत्तिसाहसम् । तदागस्त्वया सहनीयम् । निगमबन्दिनस्त्वां स्तोतुमुपक्रम्यारम्भमात्रे तिष्ठन्ति पदचलनं कर्तुमशक्नुवन्तः । निवर्तन्ते च 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इति ब्रुवन्तः । मनः पूर्वो वागुत्तरः । स्वज्येष्ठेन मनसा सह निवर्तन्ते । त्वद्विषये महदिदं साहसं क्रियते मया । इतरेषु भगवदादिषु

कृतं साहसं त्वत्प्रभावेन क्षाम्येत । त्वं क्षमापयसि भगवद्विषयं मदपराधम् । परक्षमानिर्वहणं तत् । त्वद्विषये कृतमिदं स्तुतिसाहसं केनान्येन क्षमाप्येत । त्वयैव क्षन्तव्यम् । एवं स्वपरनिर्वहणं सन्दर्शनीयम् ; सन्दर्श्येते च ॥

**वृषगिरीशदयेऽव्याप्यानिदंप्रथमस्तुतीनामारम्भमात्रम्** । अनादिस्तुतयो निगमाः । यद्यपि तेभ्यो न कोऽपि प्रथमोऽस्ति ; ते यत्रारब्धाः तत्रैव तिष्ठन्ति । आरम्भदशां नातिवर्तन्ते । अनादिस्तोतृत्वेऽपीदानीमेव स्तोतुमारब्धा इव सन्तीति विस्मयः । 'निगमान्तैरधुनापि मृग्यमाणम ॥'

**त्वयि वन्दिनो मन्दस्य मे** । मन्दः कवियशःप्रार्थीति श्लोकस्य प्रत्यभिज्ञापनं मन्दस्येति । घण्टांशत्वेन मम तव कुलक्रमागतबन्दित्वात्पारम्पर्यागतधर्मकरस्यानिपुणता त्वया सह्यैव ॥

**सन्दर्शितस्वपरनिर्वहणा तदिदं साहसम्** । यथा भगवन्तं दयापयसि ; तथा त्वमपि स्वयं दयस्व । इतरान् क्रुद्धांस्त्वं दयालून् करोषि । त्वद्विषये साहसे क्रियमाणे त्वत्क्रोधप्रसक्तौ त्वमेवात्मानं प्रसादय । दयायाः प्रसादनार्थं दयान्तरापेक्षणेऽनवस्था स्यात् । स्वपरनिर्वाहकत्वाद्दयाया अनवस्थापरिहारः । 'मोहादभिष्टुतवतो मम मन्दबुद्धेर्बालस्य साहसमिदं दयया सहेथाः' इति पादुकासहस्रान्ते एकाधिकसहस्रतमश्लोके । तत्र दयाद्वारा सहनं प्रार्थ्यते पादुका । अत्र दयायां साक्षादद्वारिका सहनप्रार्थना । न दया सर्वसुलभा घटकान्तरमपेक्षेत । निर्वहणेति समाप्तिरूपं फलं द्योत्यते । दृश्यकाव्यसमाधिरस्ति कश्चिद्धृदये । प्रहसनमिति नाटकभेदनामग्रहणमनन्तरश्लोके । एक एव नटो भाणे । निर्वहणं प्रहसननिर्वहणम् । एकाङ्कं प्रहसनम् ॥ १०२ ॥

**प्रायो दये त्वदनुभावमहाम्बुराशौ**
**प्राचेतसप्रभृतयोऽपि परं तटस्थाः ।**
**तत्रावतीर्णमतलस्पृशमाप्लुतं मां**
**पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३ ॥**

भगवतो दयासिन्धुत्वमुक्तम् । दयायाश्च निरवधिसिन्धुत्वमुक्तम् । दयामहिम्नो महाम्बुराशित्वमुच्यते । 'दिव्ये दयाजलनिधौ दिविषन्नियन्तुस्तीर्थं निदर्शितवतस्त्रिजगन्निषेव्यम् । प्राचः कवीन् निगमसंमितसूनृतोक्तीन् प्राचेतसप्रभृतिकान् प्रणमामि नित्यम् ।' इति प्राचेतसस्य मार्गदर्शित्वमुक्तं दयाप्रभाववर्णनकाव्यसरणौ । निगमबन्दिनामारम्भमात्रमित्युक्तम् । निगमसंमितसूनृतोक्तिः कविवृषा तट एव तिष्ठति त्वन्महिमसागरस्येत्युच्यते । 'मन्दः कवियशःप्रार्थी' इति श्लोकः स्मारितः पूर्वश्लोके मन्दपदेन । 'मन्दः कवियशःप्रार्थी' भवेच्चेत् 'गमिष्याम्युपहास्यताम्' इत्युपहासोचितो भवेदित्युक्तं तत्रैव । तत्फलं प्राप्यते मयेत्युच्यते प्रहसनोचितमिति ॥

**दये त्वन्महाम्बुराशौ** । त्वन्महिमजलधौ ॥

**प्राचेतसप्रभृतयोऽपि** । मन्दोऽहम् । ते तु प्रकृष्टचेतसः । सर्वज्ञा भूतभविष्यद्व्यवहितक्रान्तदर्शिनोऽन्वर्थनामानः कवयो धर्मवीर्येण यथावत् सर्वं संप्रपश्यन्तो वश्यवाचस्तट एव तिष्ठन्ति ; नावतरन्ति । परिच्छेत्तुं न प्रयतन्ते । 'अप्रमेयं हि तत्तेजः' इति भगवद्विषयेऽप्रमेयत्वं वदन्ति । त्वद्विषये तदपि वक्तुं न शक्नुवन्ति । केवलं व्यङ्ग्यमर्यादया त्वदनुभावं व्यञ्जयन्ति । कृपया पर्यपालयदित्यादौ त्वन्नाममात्रं निर्दिशन्ति । तव पर्यन्तं समीपमायान्ति । न दूरतस्तिष्ठन्ति । अगाधत्वं जानन्तस्तट एव तिष्ठन्ति ॥

**तत्रावतीर्णम्** । निर्विशङ्कमवतीर्णस्तत्र ; साहसिकत्वात् , मन्दत्वात् ; क्रान्तदर्शित्वाभावात् । अवतीर्णश्च सद्यो मग्नो न तलं स्प्रष्टुं प्रभवाम्यगाधत्वाज्जलधेः । तलमस्पृष्ट्वा पुनरुपरि प्लवनोद्यमे वीचीवेगेनोन्मज्जितः । 'आप्लुत्य पदान्यष्टौ' इत्यादाविवावतरणक्षण एव सद्य उत्प्लुतमित्यर्थः । आप्लवरूपमज्जनमात्रं लब्धमिति वा । आप्लुतं मग्नं न पुनरुत्थितम् ॥

**पद्मापतेः प्रहसनोचितम्** । प्रहसनरसमालमुत्पद्यते दम्पत्योः ।

त्वत्स्तुतिविषयत्वान्मत्साहसस्य न क्रोधस्यावकाशः ॥

**आद्रियेथाः।** ईश्वरमिथुनं प्रहसति माम् । त्वयाप्यनादृतत्वे का गतिः स्यान्मम ॥

**वेदान्तदेशिकपदे विनिवेश्य बालं**
**देवो दयाशतकमेतदवादयन्माम् ।**
**वैहारिकेण विधिना समये गृहीतं**
**वीणाविशेषमिव वेङ्कटशैलनाथः ॥ १०४ ॥**

यदुक्तं मया मत्कृतमिदं स्तोत्रमिति तन्मर्षणीयम् । उत्कृष्टेऽसत्यवचनं महते दोषाय । 'सत्यान्न प्रमदितव्यम्' 'नानृतं वदेत्' । नाहं कर्ता त्वत्पतिर्देवः कर्ता । देवकर्तृकमिदम् ; न मानुषकर्तृकम् । कविं पुराणमित्यनिदंप्रथमनिगमकविभिः पुराणकवित्वेन वर्णितस्त्वत्पतिरादिकवेः प्राचेतसादपि पूर्वतरः । दैवं चैवात्र पञ्चममिति विनयोद्रेकेण स्वस्य कारणेषु पञ्चमत्वं गीतं भगवता । कोकिलस्य पञ्चमस्वरवन्मधुरस्यास्य गीतस्य पञ्चमं कारणं दैवमेव कर्तृ । स्वयं मृत्पिण्डभूतस्य मम द्वारमात्रत्वं मृदङ्गवत् । वेणुरन्ध्रादिवद्वीणातन्त्रीवद्वा । मृत्पिण्डवच्चैतन्यरहिता वेणुवीणादयो दारुमयाः । न ते सजीवा वृक्षाः । वेदान्तदेशिक इति मन्नामकरणं कृतं भगवता । सत्येन स्वेन कृतां संज्ञामृतमधिकर्तुम् , निजभाषितं सत्यं विधातुम् ; वेदान्तसारं कृत्स्नमेतद्गिरिशिखरगेयगीतरूपेण संगृह्य मन्मुखेनेदमवादयद्देवः । 'तेन देवेन दत्तां वेदान्ताचार्यसंज्ञाम्' इत्यस्य स्मारणं देव इति॥

**वेदान्तदेशिकपदे।** देशिकपदं च भगवत्पदम् । प्रथमगुरुर्भगवान् । साक्षान्नारायणो देवो मन्मयीं तनुं कृत्वा देशिको भवति । स्वीये देशिकपदे मां विनिवेश्य ॥

**बालम्।** अशिक्षितोऽहमिति मन्मनीषा । 'अनाविष्कुर्वन्नन्वयात्' इति प्रतिपादितशास्त्रीयबाल्यविशिष्टोऽहमिति तद्बुद्धिः पक्षपातविशेषेण । नाहं तत्पदार्हो बालत्वादिति मयोक्ते बालत्वादेव त्वं तदर्ह इति स वक्ति ॥

**देवो दयाशतकमेतदवादयन्माम्** । द्विकर्मकप्रयोगोऽत्र । यथा 'एषह्येव साधु कर्म कारयति , यमेभ्यो लोकेभ्य उन्निनीषति' इति श्रुतौ । समानो विषयः । प्रयोजककर्ता हेतुकर्ता देवः । प्रयोज्यकर्ताऽहम् । प्रयोज्यकर्तृत्वमचेतनस्यापि समानम् ; यथा वेणुवीणादेः । देव इति विहाररसिकत्वमुच्यते । दैवं चैवात्र पञ्चममिति वचनस्य प्रत्यभिज्ञापनं च ॥

**वैहारिकेण विधिना समये गृहीतं वीणाविशेषमिव वेङ्कटशैलनाथः** । गिरिराजो देवः । वाद्यानां राज्ञो वीणा । वेङ्कटशैलनाथो वादकः । 'यद्यपि वीणायां गायन्ति , एतं त्वेव ते गायन्ति तस्मात्ते धनसनयः' इति गीयते गानचतुरैश्छन्दोगैः । वीणायां यद्गीयते तत्सर्वं ब्रह्मगुणगानमिति तैरुच्यते । अत्र ब्रह्मणः प्रधानगुणभूता दया गीयते । वीणेति रामायणवत्तन्त्रीलयसमन्वितत्वमस्य स्तोत्रस्य द्योत्यते । दयाविषयत्वात्स्तोत्रस्य स्वैरं गायति शैलनाथः। स्वविषयकं चेत्संकोचः स्यात् ॥ १०४ ॥

**अनवधिमधिकृत्य श्रीनिवासानुकम्पा-**
**मवितथविषयत्वाद्विश्वमव्रीडयन्ती ।**
**विविधकुशलनीवी वेङ्कटेशप्रसूता**
**स्तुतिरियमनवद्या शोभते सत्त्वभाजाम् ॥ १०५ ॥**

प्रथमं स्वप्रणीतं स्तोत्रमित्युक्तं मन्दस्य बन्दिनो ममेति । अनन्तरं भगवत्कृतमित्युक्तं देवोऽवादयदिति । किं वेदान्तदेशिकस्य व्याहतभाषित्वं न दोषायेत्याक्षिप्ते--उच्यते । वेङ्कटेशप्रसूता स्तुतिरिति । तेनोभयोर्वेङ्कटेशयोर्ग्रहणम् । 'परात्तु तच्छ्रुतेः' इति परायत्तत्वान्मत्कर्तृत्वस्य विरोधसमाधिः । मदुन्निनीषया मां श्रीनिवासनिवासभूतं गिरिशिखरं नेतुमेतत्स्तोत्ररूपं साधुकर्म ह्येष एव कारयति । एतद्विषयेऽन्वर्था सा श्रुतिः । 'अकिञ्चननिधिं सूतिमपवर्गत्रिवर्गयोः' इति दया स्तुता स्तोत्रारम्भे । तद्विषया स्तुतिरपि विविधकुशलनीवीत्यत्रोच्यते स्तोत्रान्ते ॥

**अनवधिमधिकृत्य श्रीनिवासानुकम्पाम्** । निरवधि दयामधिकृत्य । परोक्षप्रिया देवाः । देवी दया परोक्षत्वेनात्र निर्दिश्यते ॥

**वेङ्कटेशप्रसूता** । प्रसूतिमात्रं स्तोत्रस्य ; न निर्माणम् । बुद्धौ भगवदनुग्रहसिद्धस्य गर्भस्य बहिर्निःसारणं तत्कृपया । यथा प्रसवे मातुः कर्तृत्वाभावस्तथा ममापि । वेङ्कटेश इत्युभयोर्ग्रहणं कथञ्चित्साधारणत्वात्कर्तृत्वस्य । प्रसूतेत्येतत्स्तोत्रे प्रसूते प्रसूतार्भक इव तस्मिन्मम विशेषाभिमान इति व्यज्यत इव ॥

**अवितथविषयत्वाद्विश्वमव्रीडयन्ती** । स्तोतारः प्रायेणासत्यं प्रियमधिकं कथयेयुः । असता गुणेन वर्णने स्तूयमानोऽभिज्ञः पुरुषो मिथ्या मामयं स्तोता स्तौतीति लज्जेत । इतरे तच्छ्रोतृजनाश्च लज्जेरन् । स्तोता चासत्यवादी विद्वान् स्वयं लज्जेत । तथा च सर्वेषां लज्जावहा स्यात्स्तुतिः । स्तवस्य सत्यत्वे एतेषां मध्ये न कोऽप्यपत्रपेत । स्तूयमानः, स्तोता ; श्रोतेति त्रयाणामपि ग्रहणं विश्वमिति, 'वक्तारं पृच्छकं श्रोतॄन्' इत्यादाविव । प्रसूतेयं कुमारी स्तुतिर्न लज्जाकरी भवति मातुः ॥

**विविधकुशलनीवी** । प्रसूतेयं सूतिर्भवत्यपवर्गालिवर्गयोः । प्रथमदशकान्ते स्तोत्रारम्भे दयाविषये उक्तं तत्स्तुतावपि संयोज्यते । सर्वविधक्षेमनिधिः ॥

**इयमनवद्या स्तुतिः** । निरवद्येयम् 'निरानिष्टो निरवद्यः' इति श्रुतादुभयलिङ्गात्पुरुषाद्वेङ्कटेशात् प्रसूता ॥

**सत्त्वभाजां शोभते** । भगवता स्वयं निर्मितं सात्त्वतं शास्त्रं सात्त्विकानामेव शोभते । तथैव तन्निर्मितेयं स्तुतिः । सावद्या चेत्सावद्यानां शोभेत । 'नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम्' ॥ १०५ ॥

**शतकमिदमुदारं सम्यगभ्यस्यमानान्**
**वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।**
**अनितरशरणानामाधिराज्येऽभिषिञ्चेत्**
**शमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥ १०६ ॥**

गिरिशिखरस्थश्रीनिवासदयायाः स्तोतव्यत्वेन वरणे औचित्यमुच्यते ।

दयैका निरुपाधिकं मुख्यं व्यपदेशमर्हति ; इतरेषां गुणानां तत्सम्बन्धेनैव गुणीभवनादित्युक्तम् । गुण्यत इति गुणशब्दो व्युत्पन्नः । गुण्यतेऽभ्यस्यते साधुः साधुरिति । यथा दयागुणोऽभ्यस्येत , तथा दयाविषयस्तुतिरप्यभ्यस्येत दयार्थिभिः । यथाऽऽम्नायोऽभ्यस्येत , तथेयं दयास्तुतिः; तद्वत्सकलकुशलप्रदत्वात् । स्तोत्रमभ्यस्यमाना निम्नदेशस्था निम्नजना गिरिशिखराद्दयया सम्यगालोक्येरन् । उन्नतस्थानात्तस्मात्ते दयया निर्झरादिव्याजेन स्वाम्भःपूरैरभिषिच्येरंश्च । इदं सर्वं सुलभं गिरिशिखरस्थप्रभोर्दयायाः स्तवने । नात्र स्तूयमानायाः सार्वभौम्या महिष्या दयाया अभिषेकः । नापि तदाश्रयभूतदिव्यदम्पत्योः श्रीश्रीनिवासयोः । नापि स्तोतुराचार्यस्य वेदान्तदेशिकपदे सद्यो विनिवेशितस्य तत्पदेऽभिषेकार्हस्य । किं तु स्तोत्रावर्तकजनानामभिषेक इति रसिकमनोरञ्जनमिदम् ॥

**इदमुदारं शतकम्** । न दया तथोदारा ; यथा तस्याः स्तुतिरियम् । उदारस्य वरदराजस्य स्तोत्रमुदारमित्युक्तम् 'इति विहितमुदारम्' इति । उदारं गुणैः ॥

**सम्यगभ्यस्यमानान्** । य इदं पठेयुस्ते तद्रसावर्जिताः श्रद्धयैतत्पुनः पुनरावर्तयेयुः । आवृत्त्याधिक्ये पठनस्य सम्यक्त्वमप्यधिकं भवेत् । उत्तरोत्तरं रसो वर्धेत । नात्रानावृत्तिरिष्यते । अनावृत्ता आवृत्तिरेवेष्यते ॥

**वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती** । उन्नतस्थानात् सम्यक्पश्यन्ती ॥

**शमितविमतपक्षा शार्ङ्गधन्वानुकम्पा** । 'कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम्' इत्युक्तं स्मार्यते शार्ङ्गधन्वेति । यदा बहवो जना दयाशतकं सम्यगभ्यस्यन्ति ; तदा विजयः सम्पद्यते वृषगिरीशस्य । एतदर्थमेव वृषागिर्युपाश्रयणं तस्य । विमता दण्ड्यत्ववादिनः विमतपक्षो दण्ड्यत्वपक्षः । दण्ड्यत्ववादिनः प्रतिपक्षान्प्रशमय्य विजयः सम्पादितः । न जेतुर्भगवतः; तद्दयाया वाभिषेकः । जितस्याभिषेचनं दयाराज्ये ।

अभिषेचयिता शेषी । अभिषिच्यते शेषः । बध्वा शृंखलाभिर्गृहीतस्याभिषेकः ॥

**अनितरशरणानामाधिराज्येऽभिषिञ्चेत्** । यथा रामायणं रामपट्टाभिषेकेन समाप्यते , तथेदं दयास्तोत्रं पठितुर्मूर्धाभिषेकेन समाप्यते । अगतिरकिञ्चनोऽधिराजपदेऽभिषिच्यते । 'अभ्यषिञ्चन्नरव्याघ्रं' । अत्र नरेष्ववरस्याकिञ्चनस्याभिषेकः । पुत्रमभिषिच्यैव माता दया विश्राम्येत् ॥ १०६ ॥

**विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गां सुधा-**
**सध्रीचीमिति वेङ्कटेश्वरकविर्भक्त्या दयामस्तुत ।**
**पद्यानामिहं यद्विधेयभगवत्सङ्कल्पकल्पद्रुमा-**
**ज्झञ्झामारुतधूतचूतनयतः साम्पातिकोऽयं क्रमः ॥१०७॥**

शतकमिदमुदारमित्युक्तं दयाशतकस्योदारत्वम् । भगवत्सङ्कल्पमन्तरा न कस्यापि फलस्य लाभसम्भवः । दयाविधेयो भगवत्सङ्कल्प इत्युच्यते । सङ्कल्पस्य कल्पद्रुमत्वञ्चोच्यते दयाविधेयस्य तस्यौदार्योपपादनाय । कल्पद्रुमो न मोक्षं दातुं प्रभवेत् । अयं समीचीनः कल्पः सङ्कल्पकल्पद्रुमस्तमपि दद्यात् । दयाविधेयभगवत्सङ्कल्पकल्पद्रुमात्पद्यशतकरूपशतफलानि स्तोतुराचार्यस्य बुद्ध्येकक्षणे निपात्यन्ते । दया च फलशतकपातयितृझञ्झामारुतो भवति । यौगपद्येनाचार्यबुद्धौ प्रतिभातेयं स्तुतिर्दयाधीनसङ्कल्पेन ॥

**विश्वानुग्रहमातरम्** । विश्वोपकारं दुहाना दया । विश्वं कृत्स्नं युगपदनुगृह्णाति । युगपत्सर्वाणि पद्यान्यनुजगृहिरे दयया ॥

**व्यतिषजत्स्वर्गापवर्गाम्** । प्रजा यद्यदिच्छन्ति तत्तद्देयं माता ॥

**सुधासध्रीचीम्** । सुधावत् सततमधुरा माता । सुधामधुरायास्तस्याः स्तुत्या सुधामधुरया भाव्यम् ॥

**इति वेङ्कटेश्वरकविर्भक्त्या दयामस्तुत** । इतीत्युक्तकृत्स्नपरामर्शः । वेङ्कटेश्वरकविरित्युभयकर्तृग्रहणम् । उभौ कवीश्वरौ । भक्तिमात्रं मदीयम् । स्तुतिस्तु भगवदीया । दयाविषयत्वाद्भक्तेः उभयोर्वा भक्तिः । स्तुतिकर्तृत्वस्योभयान्वितत्वात् ॥

यद्विधेयभगवत्सङ्कल्पकल्पद्रुमात् । 'कुर्यात्क्रान्तं मनसिजतरुर्मां रसज्ञं फलस्य' इति मनसिजस्य सङ्कल्पभूतकामस्य तरुत्वरूपणं मालविकाग्निमित्रे । भगवत्सङ्कल्पस्य कल्पद्रुमत्वे कः सन्देहः ? सङ्कल्पस्य दयाधीनत्वाद्दयायाः फलप्रदत्वस्य न किञ्चिदपहीयेत सङ्कल्पस्य कल्पद्रुमत्वरूपणेन ॥

झञ्झामारुतधूतचूतनयतः । दयाया वेङ्कटगिरिनिर्गच्छन्निर्झरझरत्कारवत्त्वं वक्ष्यतेऽनन्तरश्लोके । अत्र तस्यास्ततो निर्यज्झञ्झामारुतसादृश्यमभिप्रेयते । यद्यपि दया मृदुहृदया चण्डमारुतवदतिवेगपतद्गिरिनिर्झरवच्च प्रचण्डवेगा साऽऽश्रितजनानुग्रहविधौ ; इदमपरं निमित्तं वेङ्कटगिरीश्वरदयायाः स्तुत्यत्वाय वरणे । दयामारुतसम्पातेन भगवत्सङ्कल्पकल्पद्रुमाद्भगवद्बुद्धौ मद्बुद्धौ च निपातितानि पद्यानि । प्रबलदयामारुतवेगेन युगपद्धानं पद्यानाम् । 'यो वेत्ति युगपत्सर्वम्' इति सर्वस्य युगपद्वेत्तुर्भगवतः पद्यशतकस्य युगपद्वेदनं सुकरमेव । भगवत्सङ्कल्पकल्पद्रुमे पूर्वसिद्धान्येवेमानि पद्यानीति व्यज्यते । सङ्कल्पकल्पद्रुमे सिद्धानामेव मन्मुखेन वादनम् । यथा विश्वस्य यौगपद्येन सृष्टौ यौगपद्यमनुग्रहकार्यम् । मद्बुद्धिर्मारुतनिपातितानां संग्राहिका ; दात्री चापेक्षकेभ्यः । ये च नः शिष्यास्तेऽस्मत्सुता एव । तत्सन्तोषसमर्पणक्षमं तदनुभाव्यमिदं स्तोत्रम् ॥ १०७ ॥

**कामं सन्तु मिथः करम्बितगुणावद्यानि पद्यानि नः**
**कस्यास्मिञ्छतके सदस्तुकतके दोषश्रुतिं क्षाम्यति ।**
**निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोच्चल-**
**न्दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः ॥ १०८ ॥**

स्तुतिरियमनवद्येत्युक्तम् । त्वत्प्रसूता स्तुतिर्मातुस्तवानवद्या स्यात् । काक्याः काकशिशुः स्वर्णवर्ण इति वदन्ति । नैकान्तं निरवद्यानि पद्यानि । सन्ति तत्र तत्र कतिपये दोषाः । दोषमिश्राण्येव पद्यानीत्याक्षिप्ते—उच्यते अक्षेप्ता विद्वांस्तोत्रस्य गुणवत्तां गुणभूयिष्ठतां च नापलपति । सन्ति गुणाः

सन्ति दोषाश्चेति तच्चायम् । गुणैकान्तया दयया, तदाश्रयभूतदिव्य-दम्पतिभ्यां च दोषगन्धकीर्तनमपि न मृष्येत । मत्कृता, सर्वकर्तृकर्तृका वा, उभयकर्तृका वा भवतु दयास्तुतिः । नात्र दोषकीर्तनं दिव्यदम्पती मर्षयेताम्॥

**कामं सन्तु मिथः करम्बितगुणावद्यानि पद्यानि नः।** 'नः' इति सर्वेषां कर्तृणामनुसन्धानम् । दयायास्तदधीनभगवत्सङ्कल्पस्य, भगवतः; मम च कर्तृत्वेऽन्वयः । प्रतिपद्यं गुणदोषमिश्रत्वमस्तु नाम यथाविमर्शकमनोरथम् । 'यस्मिन् प्रतिश्लोकमवद्धवत्यपि' इति शुकवचनं स्मर्तव्यम् ।

**सदम्बुकतकेऽस्मिञ्छतके** । कतकमिदं शतकम् । न केवलं स्वयं दोषशून्यम् । विमर्शकमनःशोधकम्, तत्कालुष्यनिरासकं तत्प्रसत्तिकरमिदं शतकम् । 'तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः' इत्युक्तं महाकविना । एतच्छ्रोतॄणां मनसि यद्यस्ति काचिच्छ्यामिका, सा विभज्य पृथक्कृत्य दूरीक्रियेत मनश्च विशुद्धं प्रसाद्येतानेन शतककतकेन । 'रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा' इति प्रसन्नत्वेन प्रसिद्धसन्मनसामपि प्रसन्नतरत्वावहं शोधकं कतकमिदम् । शोधकानामपि शोधकमिदम् । शोधकाञ्छोधयति 'तीर्थीकुर्वन्ति तीर्थानि' इतिवत् । सच्छब्देन, अम्बुशब्देन च प्रसन्नाम्बु सन्मनुष्यमनो यथेत्यार्षवचनं स्मार्यते । कामं कीर्तयन्तु जनास्तमसेति वाल्मीक्याश्रमनद्या नाम । निशामने वस्तुतः साऽकर्दमा रमणीया सन्मनुष्यमनोवत्प्रसन्नाम्बुमती । 'स्वच्छान्याकुलतान्यपि । तोयानि तोयराशीनां मनांसि न मनस्विनाम्' इति भारविस्तुल्ययोगितयाऽऽर्थौपमानमनुसराति । उपोद्घाते वर्णितोऽर्थोऽपि ग्राह्यः । इदमेकमेवाभ्यर्थयामः । श्रोतृमनसा सदम्बुना भवितव्यम् । अम्बुशून्यमनार्द्रशुष्कपङ्कमात्रं चेच्चेतः, कथं तत्प्रसादयेम ? 'न कतकं पङ्कप्रसादनाय' इति काव्यालङ्कारसूत्रे वामनः । सच्चेद्रसरूपांबु हृदये, ध्रुवं तद्धृदयं प्रसाद्येत । सदम्बु चेद्धृदयं कतकं भवेच्छतकम् । सदम्बुनो हृदयस्य कतकम् । संतन्यमानापराधगणानामस्माकं मोक्षः कथं भविष्यतीति शङ्काकलङ्कः स्यात् ।

निरवधिकस्य दयाप्रभावस्य सम्यग्बोधनेन सतां प्रपन्नानां त्रासरूपकलङ्कं चेतसः पृथक्कृत्य निरस्येदिदं शतकम् ॥

कस्य दोषश्रुतिं क्षाम्यति । क्षमा वर्णितैतावता प्रबन्धेन । अक्षमैव सा भवेदेतत्स्तोत्रे दोषकीर्तनमात्रे । न क्षाम्येत्क्षमा शतकस्य सदोषस्ववर्णनम् । नापि दिव्यदम्पती तत्क्षाम्येताम् ॥

निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोच्चलन्दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः । न दोषवादिनो हिंस्याद्दया करुणामयी। दोषशब्दं केवलमभिभावयति प्रबलेन स्वनिर्झरकोलाहलशब्देन । एवमश्रुतिं नीयते दोषकीर्तनं 'यथा दुन्दुभेर्हन्यमानस्य.... .... .... इति बार्हदारण्यकश्रुतिः । प्रबलतरेण स्वशब्देन मन्दस्य दोषशब्दस्याभिभवः । दया निष्प्रत्यूहनिर्झररूपेण व्यक्तिं गच्छति वृषाद्रिकटकेष्वित्युक्तम् । दयया छलेन दोषश्रुत्यभिभवः क्रियत इत्यपि छलशब्दशक्त्या ध्वन्यत इव। यदि विमर्शकचोदितो दोषः सत्य एव स्यात्सोऽपि कथञ्चिच्छलेन निरसिसिषितः । दीनेत्यात्मदैन्यानुसन्धानम् । दीनस्य कवेरालम्बनं दिव्यदम्पतिदया । दयाकल्लोलकोलाहलत्वं स्तोत्रस्यापि । हयवदनहेषाहलहलो मूलमाचार्यकवितायाः । सति सम्भवे कार्यस्य कारणगुणपूर्वकत्वमुचितम् । हयवदनहेषाहलहलात्कल्लोलकोलाहलः । शब्दतोऽपि सारूप्यं कार्यकारणयोः कारणगुणोऽनुवर्तत इव काव्यभूते कार्ये ॥

समाप्तोऽयं ग्रन्थः ॥

शुभं भूयात् ॥



